हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः
६४
न्यायविभागे(८)अष्टमं पुष्पम् ।

श्रीमथुरानाथतर्कवागीशकृतं

# व्याप्तिपञ्चकरहस्यम् ।

# सिंहव्याघ्रलक्षणरहस्यं च



प्रकाशकः—
जयकृष्णदास—हरिदासगुप्तः—
चौखम्बा संस्कृत सीरिज आफिस, विद्याविलास प्रेस,
गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

१९८५

THE
# KASHI·SANSKRIT·SERIES
( *HARIDAS SANSKRIT GRANTHAMĀLĀ* )

## NO. 64.
( Nyāya Section No. 8 )

---

THE
# VYĀPTĪPANCHAKARAHASYAM
AND
# SINHAVYĀGHRA LAKSHAṆA RAHASYAM
By
*S'ri Mathūrā Nātha Tarkavāgīs'a.*

WITH GANGĀNIRJHARINI COMMENTARY AND NOTES
By
*Nyāyāchārya Pandit Sri S'ivadatt Misra*
PROFESSOR GOVERNMENT SANSKRIT COLLEGE, BENARES.

*Edited By*
PANDIT DHUNDHIRAJ S'ASTRI N. U., K. T.
Professor D. A. V. Veda Vidyālaya, Benares.

PRINTED, PUBLISHED & SOLD BY
JAI KRISHNADAS-HARIDAS GUPTA,
*The Chowkhamba Sanskrit Series office, Vidya Vilas Press,*
*North of Gopalmandir, Benares City.*

1928.

Printed-Published & sold by
JAI KRISHNADAS-HARIDAS GUPTA,
The Chowkhamba Sanskrit Series Office,
VIDYA VILAS PRESS,
North of Gopal Mandir,
BENARES CITY.

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

Agents:

1 Otto Harrassowitz, Leipzig:
GERMANY.

2 The Oriental Book-supplying Agency,
POONA.

२०५७ ॥ श्रीः ॥

महामहोपाध्याय मैथिल
श्रीगंगेशोपाध्याय
विरचितं
सिंहव्याघ्रलक्षणसहितं



# व्याप्तिपञ्चकम् ।

रघुनाथशिरोमणिकृतया दीधित्या—मथुरानाथ तर्कवागीश—जगदीशतर्कालङ्कार विरचिताभ्यां माथुरी—जागदीशी-टीकाभ्यां-न्यायाचार्य पं० श्रीगिरीशप्रसादशुक्ल-विरचित-मूलार्थबोधिनी टिप्पण्या समुद्भासिताभ्यां क्रोडपत्रेण च समन्वितम् ।

तच्च

ठक्कुरोपनामक पं० श्रीकनकलालशर्मणा
मैथिलेन

संशोध्य

काशीस्थ सत्यनामाख्ययन्त्रालये
महेशप्रसाद द्वारा—
मुद्रयित्वा
प्रकाशितम् ।



सं० १९८२

# भूमिका ।



आर्यश्रेष्ठा विद्वांसः ।

अनुमानाटवीप्रविविक्षूणां न्यायशास्त्राध्येतॄणां 'व्याप्तिपञ्चकम्, दीधिति-माथुरी-जागदीशी-गादाधरी प्रभृतिभिर्व्याख्यानैरलङ्कृतं प्राग्द्वारम् । विशेषतश्चा-स्मिन्देशे परीक्षासु च माथुरी-जागदीशीसहितस्यैव 'व्याप्तिपञ्चकस्य, प्रचारः । सिंहव्याघ्रलक्षणयोरपि जाग-दीशीसहितयोर्वाराणसेयराजकीयसंस्कृतपरीक्षायां प्रवि ष्टतयाऽनल्पाऽपेक्षा परीक्षार्थिनाम् । परन्त्वद्यावधि कुत्राऽपि सिंहव्याघ्रलक्षणोपेतं व्याप्तिपञ्चकं मूलार्थप्र-तिपादकटिप्पण्युपेत-माथुरी--जागदीशीभ्यामलङ्कृतं न क्वाऽपि मुद्रितम् । अतः पं० श्रीकनकलालशर्मणां नियोगतोऽहमत्र टिप्पणीनिर्माणे प्रवृत्तः । यद्यपि समय स्य स्वल्पत्वेन, ग्रन्थबाहुल्यभयाच्च वहुषु स्थलेषु टिप्पणी न लिखिता तथापि द्वितीयसंस्करणे तत्पूर्त्तये यतिष्ये । अत्र मनुष्यजन्मसुलभेनास्मदीयप्रमादेन, अक्षरसंयोजका-नां प्रमादेन च या अशुद्धयोऽभवन् विद्वांसस्ता निराकुर्युः, द्वितीयसंस्करणार्थञ्चास्मान् सूचयेयुरिति भूयो भूयः सम्प्रार्थ्य विरमामीति शम् ।

वै० कृ० ४/१९८२ काशी ।



भवतां कश्चित्

गिरीशशुक्लः ।

* श्रीः *

# व्याप्तिपञ्चकम् ।

## माथुरीटीकासहितम् ।

### नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः ।

अनुमानप्रामाण्यं निरूप्य व्याप्तिस्वरूपनिरूपणमारभते-नन्विवत्यादिना ।( अनुमितिहेतु ) इत्यस्याऽनुमाननिष्ठप्रामाण्यानुमितिहेत्वित्यर्थः । ( व्याप्तिज्ञाने ) इत्यत्र च विषयत्वं सप्तम्यर्थः । तथा च, अनुमाननिष्ठप्रामाण्या (१)ऽनुमितिहेतुव्याप्तिज्ञानविषयीभूता व्याप्तिः केत्यर्थः । अनुमाननिष्ठप्रामाण्यानुमितिहेत्वित्यनेन व्याप्तेरनुमानप्रामाण्योपपादकत्वकथनादनुमानप्रामाण्यनिरूपणानन्तरं व्याप्तिनिरूपणे (२)उपोद्घात एव सङ्गतिः सूचिता । उपपादकत्वञ्चात्र ज्ञापकत्वम् ॥

---

(१) अनुमितीति । अनुमानं प्रमाणम् प्रमितिकरणतावच्छेदकधर्मवत्त्वात् प्रत्यक्षादिवत् इत्येतादृशानुमितिहेतुभूतं यद्व्याप्तिज्ञानमित्यर्थः ।

(२) उपोद्घातलक्षणन्तु—प्रकृतोपपादकत्वम् ।

[ चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः ] इति च ।

(१)केचित्तु—अनुमितिपदमनुमितिनिष्ठेतरभेदानुमितिपरम् । (२)तथा चानुमितिनिष्ठेतरभेदानुमितौ यो हेतुः प्रागुक्तव्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वरूपस्तद्घटकं यद्व्याप्तिज्ञानं तदंशे विशेषणीभूता व्याप्तिः केत्यर्थः । घटकत्वार्थकसप्तम्या तत्पुरुषसमासात् । तथा च प्रागुक्तानुमितिलक्षणोपोद्घात एव सङ्गतिरनेन सूचितेत्याहुः ॥

न तावदव्यभिचरितत्वम् । तद्धि न साध्याऽभाववदवृत्तित्वम् ॥

न तावदिति । ( तावत् ) वाक्याऽलङ्कारे । ( अव्यभिचरितत्वम् )अव्यभिचरितत्वपदप्रतिपाद्यम् । तत्र हेतुमाह—तद्धीत्यादि ( हि ) यस्मात् ( तत् ) अव्यभिचरितत्वपदप्रतिपाद्यम् । ( नेति ) सर्वस्मिन्नेव लक्षणे सम्बध्यते । (३)तथा च (४)व्याप्ति र्यतः साध्याऽभाववदवृत्तित्वादिरूपाऽव्यभिचरितत्वशब्दप्रतिपाद्यस्वरूपा न, अतोऽव्यभिचरितत्वशब्दप्रतिपाद्यरूपा नेत्यर्थः पर्य्यवसितः । विशेषाऽभावकूटस्य सामान्याऽभावहेतुता च प्रसिद्धैवेति । अत एतन्नञ्द्वयोपादानं न निरर्थकम् ॥

(१) केचित्त्विति । अनुमितिलक्षणेन साकमुपोद्घातवादिनः ।

(२) तथा चेति । अनुमितिपदस्याऽनुमितिनिष्ठेतरभेदानुमितिपरत्वे चेत्यर्थः

(३) तथा चेति । नेत्यस्य प्रत्येकंलक्षणे सम्बन्धे चेत्यर्थः ।

(४) व्याप्तिरिति । अत्रानुमितिप्रकारस्तु—व्याप्तिः अव्यभिचरितत्वपदप्रतिपाद्यभिन्ना साध्याभाववदवृत्तित्वादिरूपाऽव्यभिचरितत्वपदप्रतिपाद्ययावद्भेदकूटवत्त्वात् पक्षतावत् ।

साध्याभाववदवृत्तित्वमिति । ( वृत्तम् ) वृत्तिः । भावे निष्ठाप्रत्ययात् । वृत्तस्याऽभावोऽवृत्तम् । वृत्त्यभाव इति यावत् । साध्याऽभाववतोऽवृत्तं साध्याभाववदवृत्तम् । साध्याभाववद्वृत्त्यभाव इति यावत् । तद् यत्रास्ति स साध्याभाववदवृत्ती । मत्वर्थीयेन्प्रत्ययात् । तस्य भावः साध्याभाववदवृत्तित्वम् । तथा च साध्याभाववद्वृत्त्यभाववत्त्वमिति फलितमिति प्राञ्चः ॥

तदसत्, ( न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः ) इत्यनुशासनविरोधात् । तत्र कर्मधारयपदस्य बहुव्रीहीतरसमासपरत्वात् । (१)तच्च (२)अगुणवत्त्वमिति साधर्म्यव्याख्यानावसरे गुणप्रकाशरहस्ये तद्दीधितिरहस्ये च स्फुटम् । अव्ययीभावसमासोत्तरपदार्थेन समं तत्समासानिविष्टपदार्थान्तराऽन्वयस्याव्युत्पन्नत्वात् । यथा भूतल उपकुम्भं भूतलेऽघटमित्यादौ भूतलवृत्तिघटसमीप-तदत्यन्ताऽभावयोरप्रतीतेः । (३)एतेन वृत्तेरभावोऽवृत्तीत्यव्ययीभावानन्तरं साध्याभाववतोऽवृत्ति यत्रेति बहुव्रीहिरित्यपि प्रत्युक्तम् । वृत्तौ साध्याभाववतोऽनन्वयापत्तेः । अव्ययीभावसमासस्याऽव्ययतया तेन समं समासान्तराऽसम्भवाच्च । नञुपाध्यादिरूपाऽव्ययविशेषाणामेव समस्यमानत्वेन परिगणितत्वात् ।

---

(१) तच्चेति । कर्मधारयपदस्य बहुव्रीहीतरसमासपरत्वञ्चेत्यर्थः ।

(२)अगुणवत्त्वमिति । गुणप्रकाशरहस्ये गुणप्रकाशदीधितिरहस्ये च,गुणा यत्र विद्यन्ते ते गुणवन्तो न गुणवन्तोऽगुणवन्तस्तेषाम्भावोऽगुणवत्त्वमिति समासः कृतः । गुणस्याऽभावोऽगुणं तदस्यास्तीत्यगुणवान् तस्य भावोऽगुणवत्त्वमिति समासो न कृत इति भावः ।

(३) एतेन—अव्ययीभावसमासोत्तरपदार्थेनेत्यादिव्युत्पादनेन ।

वस्तुतस्तु--साध्याभाववतो न वृत्तिर्यत्रेति त्रिपदव्यधिकरण-बहुव्रीह्युत्तरं त्वप्रत्ययः। साध्याऽभाववत इत्यत्र निरूपितत्वं षष्ठ्यर्थः। अन्वयश्चास्य (१)वृत्तौ। तथा च साध्याभावाधिकरणनिरूपित-वृत्त्यभाववत्त्वमव्यभिचरितत्वमिति फलितम्। नच व्यधिकरणबहु-व्रीहिः सर्वत्र न साधुरिति वाच्यम्। अयं हेतुः साध्याभाववद्वृत्ति-रित्यादौ व्यधिकरणबहुव्रीहिं विना गत्यन्तराभावेनाऽत्रापि व्यधि-करणबहुव्रीहेः साधुत्वात्।

साध्याभावाधिकरणवृत्त्यभावश्च (२)तादृशवृत्तित्वसामा-न्याभावो बोध्यः। तेन धूमवान् वन्हेरित्यादौ धूमाभाववज्जलह्रदादि-वृत्त्यभावस्य, धूमाभाववद्वृत्तित्व-जलत्वोभयत्वावच्छिन्नाभावस्य च वन्हौ सत्त्वेऽपि नाऽतिव्याप्तिः।

---

(१) वृत्तावित्यस्य भावप्रधाननिर्देशतया वृत्तित्वमर्थः। एवमग्रेऽपि।

(२) ननु धूमाभाववद्ह्रदवृत्तित्वाभावं, धूमाभाववद्वृत्तित्व-जलत्वोभयाभावं च तादृशवृत्तित्वप्रतियोगिकमादाय धूमवान् वन्हेरित्यत्र प्रसक्तामति-व्याप्तिम्परिजिहीर्षुराह---तादृशवृत्तित्वसामान्याभावो बोध्य इति। तदर्थश्च साध्याभावाधिकरणवृत्तित्वत्वेतरधर्मानवच्छिन्नतादृशवृत्तित्वत्वाव-च्छिन्नप्रतियोगिताकाभावः। तथा चोक्ताभावयोरतादृशत्वेन नातिव्याप्तिः। विस्तरस्तु पत्रिकायां द्रष्टव्यः॥

(अस्यैवान्यविधोल्लेखः)

ननु साध्याभावाधिकरणवृत्त्यभाव इत्यत्र तादृश वृत्तिताप्रतियोगिकाऽभावग्रहणे धूमवान् वन्हेरित्यादौ धूमाभावरूपसाध्याभावस्य जलह्रदादिरूपयत्किञ्चिदधि-करणनिरूपितवृत्तित्वाभावस्य वन्हौ सत्त्वादतिप्रसक्तामतिव्याप्तिं परिहर्तुं परिष्क-रोति-तादृशवृत्तित्वसामान्याभाव इति। तादृश वृत्तितात्वावच्छिन्नप्रतियो-गिताकाभाव इत्यर्थः। हेतौ साध्याभावस्य यावदधिकरणनिरूपितवृत्तित्वाभावो

(१) साध्याऽभाववद्वृत्तिश्च हेतुतावच्छेदकसम्बन्धेन विवक्षणीया, तेन वन्ह्यभाववति धूमावयवे (२) जलह्रदादौ च समवायेन कालिकविशेषणतादिना च धूमस्य वृत्तावपि न क्षतिः। (३) साध्याभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बोध्यः। तेन वन्हिमान् धूमादित्यादौ समवायादिसम्बन्धेन वन्हिसामान्याभाववति संयोगसम्बन्धेन तत्तद्वन्हित्ववन्हिजलोभयत्वाद्यवच्छिन्नाभाववति च पर्वतादौ संयोगेन धूमस्य वृत्तावपि न क्षतिः।

विवक्षित इतियावत्। तथा चोक्तस्थले हेतौ धूमाभावात्मकसाध्याभावस्य जलह्रदादिरूपाधिकरणनिरूपितवृत्तित्वाऽभावसद्भावेऽप्ययोगोलकरूपसाध्याभावाधिकरणनिरूपितवृत्तित्वाऽभावासत्त्वान्नातिव्याप्तिरिति भावः॥

(१) ननु येन केनचित्सम्बन्धेन साध्याभावाधिकरणवृत्तित्वग्रहणे समवायसम्बन्धेन वन्हिरूपसाध्याभावाधिकरणे धूमावयवे (धूमैकदेशे) जलह्रदादौ च समवायेन कालिकसम्बन्धेन च हेतो धूमस्य वृत्तित्वाद्वन्हिमान् धूमादित्यादावव्याप्तिरत आह—साध्याभाववद्वृत्तिश्च हेतुतावच्छेदकसम्बन्धेन विवक्षणीयेति। येन सम्बन्धेन हेतुस्तिष्ठति सहेतुतावच्छेदकसम्बन्धः। सच प्रकृते संयोगरूपः तथा च हेतुतावच्छेदकसम्बन्धेन संयोगेन हेतो धूमस्य धूमावयवे जलह्रदादौ चावृत्तित्वान्नाऽव्याप्तिरिति भावः॥

(२) प्रसिद्धविपक्षान्तर्भावेणाऽव्याप्तिं सङ्गमयति—जलह्रदादौ चेति।

(३) ननु येन केनचित्सम्बन्धेन साध्याभावग्रहणे वन्हिमान् धूमादित्यादौ समवायादिसम्बन्धेन सकलवन्ह्यभावाधिकरणे संयोगसम्बन्धेन तत्तद्वन्हित्ववन्हिजलोभयत्वाद्यवच्छिन्नाभावाधिकरणे च पर्वतादौ संयोगेन हेतो धूमस्य वृत्तित्वेन लक्षणाऽसमन्वयादव्याप्तिरत आह—साध्याभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नेत्यादि। येन सम्बन्धेन साध्यस्तिष्ठति स साध्यतावच्छेदकसम्बन्धः। स चात्र संयोगात्मकः। तथा च संयोगेन साध्याभावविवक्षणादन्यसम्बन्धेन साध्याभावाधिकरणे हेतो वृत्तित्वेऽपि विवक्षितसम्बन्धेन तत्र तदवृत्तित्वान्नाव्याप्तिप्रसङ्ग इति भावः॥ साध्यतावच्छेदकसम्ब-

 द्रव्यत्वप्रकारकप्रमाविषयत्वात्

ननु तथापि गुणत्ववान् ज्ञानत्वात् सत्तावान् जातेरित्यादौ विषयित्व-(१)अव्याप्यत्वादिसम्बन्धेन तादृशसाध्याऽभाववति ज्ञानादौ ज्ञानत्वजात्यादेर्वर्तमानत्वादव्याप्तिः । नच साध्याभावाधिकरणत्वमभावीयविशेषणताविशेषसम्बन्धेन विवक्षितमिति वाच्यम् । तथा सति घटत्वात्यन्ताभाववान् घटान्योऽन्याभाववान् वा पटत्वादित्यादौ साध्याभावस्य (२)घटत्वादेर्विशेषणताविशेषसम्बन्धेनाधिकरणस्याऽप्रसिद्ध्याऽव्याप्तेरिति चेन्न । अत्यन्ताभावाऽन्योन्याभावयोरत्यन्ताभावस्य सप्तमपदार्थस्वरूपत्वात् । अत्यन्ताभावान्योन्याभावयोरत्यन्ताभावस्य प्रतियोग्यादिस्वरूपत्वनये तु साध्यतावच्छेदकसम्बन्धावच्छिन्न (साध्यतावच्छेदकावच्छिन्न)प्रतियोगिताकसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वं वक्तव्यम् । वृत्त्यन्तं प्रतियोगिताविशेषणम् । तादृशसम्बन्धश्च वन्हिमान् धूमादित्यादि भावसाध्यकस्थले विशेषणताविशेष एव । घटत्वाभाववान् पटत्वादित्याद्यभावसाध्यकस्थले तु समवायादिरेव । (३)समवाय-विषयि-

न्धावच्छिन्नेत्याद्यर्थस्तु सम्बन्धविधया यः प्रकृतसाध्यतावच्छेदकः सम्बन्धविधया तदवच्छिन्नत्वे सति धर्मविधया यः प्रकृतसाध्यतावच्छेदको धर्मविधया तदवच्छिन्ना या प्रतियोगिता तन्निरूपकोऽभाव इति बोध्यः । अत्र संसर्गावच्छिन्नत्वाऽनुपादाने समवायेन वन्ह्यभात्रमादाय दोषः । धर्मावच्छिन्नत्वानुपादाने तत्तद्वन्ह्यभावं वन्हिजलोभयाभावञ्चादाय दोषो ज्ञेयः ।

(१)अव्याप्यत्वेति । अव्याप्यत्वम् व्यभिचरितत्वम् । स्वाभाववद्वृत्तित्वमिति यावत् । स्वपदेन साध्याभाव उपादेयः ॥

(२) अत्यन्ताभावस्याभावः प्रतियोगिरूपः । अन्योन्याभावस्याभावः प्रतियोगितावच्छेदक स्वरूप इति नियमादिति भावः ॥

(३)ननु साध्यीयप्रतियोगितोपादानेनापि कार्यसिद्धिर्भवत्येवेति मनस्याशंक्य

त्वादिसम्बन्धेन प्रमेयादिसाध्यके ज्ञानत्वादिहेतौ ; साध्यतावच्छेदकसमवायादिसम्बन्धावच्छिन्नप्रमेयाद्यभावस्य कालिकादिसम्बन्धेन योऽभावः सोऽपि प्रमेयतया साध्यान्तर्गतस्तदीयप्रतियोगिताऽवच्छेदककालिकादिसम्बन्धेन साध्याऽभावाऽधिकरणे ज्ञानत्वादेर्वृत्तेरव्याप्तिवारणाय सामान्यपदोपादानम् । साध्यसामान्यीयत्वञ्च यावत्साध्यनिरूपितत्वम् (१)स्वानिरूपकसाध्यकभिन्नत्वमिति यावत् । अस्यैकोक्तिमात्रपरतया गौरवस्यादोषत्वात्, (२)अनुमितिकारणतावच्छेदके च भावसाध्यकस्थलेऽभावीयविशेषणताविशेषेण साध्याऽभावाधिकरणत्वम्, अभावसाध्यकस्थले च यथायथं समवायादिसम्बन्धेन साध्याभावाधिकरणत्वमुपादेयम् । साध्यभेदेन कार्यकारणभावभेदात् । नच (३)तथापि घटाऽन्यो

---

साध्यसामान्यीयेत्यत्र सामान्यपदव्यावृत्तिमाह—समवायविषयत्वादीति । अत्रापि साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्साध्यीयप्रतियोगितानिवेशे समवायेन प्रमेयसाध्यकस्थले न दोषोऽतो विषयतासम्बन्धेन साध्यत्वाऽनुसरणम् ।

(१) ननु साध्यसामान्यीयत्वस्य यावत्साध्यनिरूपितत्वार्थकत्वे तद्रूपवान् तद्रसादित्यत्राऽव्याप्तिः, साध्यस्यैकव्यक्तिकत्वेन यावत्साध्याऽप्रसिद्धेरत आह-स्वानिरूपकसाध्यकेति । स्वस्याऽनिरूपकं साध्यं यस्येतिविग्रहः । स्वपदेन कालिकसम्बन्धावच्छिन्नासाध्याभावनिष्ठप्रतियोगिता ग्राह्या । स्वानिरूपकसाध्यकपदेनापि सैव ग्राह्या-तद्भिन्ना स्वरूपसंबन्धावच्छिन्ना साध्याभावनिष्ठा प्रतियोगिता, अत्रानुगमरीत्यातु साध्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वम् स्वानिरूपकसाध्यकभिन्नत्वम् । भेदीयप्रतियोगिताऽवच्छेदकत्वन्तु निरूपकत्वसम्बन्धावच्छिन्नं ग्राह्यमिति भावः ।

(२) अनुमितिकारणतावच्छेदके व्याप्तिपदार्थे इत्यर्थः ।

[३] तथापीति । निरुक्तसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसंबन्धेन साध्याभावाधिकरणत्वनिवेशेऽपीत्यर्थः ।

न्याभाववान् पटत्वादित्यत्राऽन्योन्याभावसाध्यकस्थले (१) घट-त्वादिरूपे साध्याऽभावे न साध्यप्रतियोगित्वम्, (२)न वा समवायादिसम्बन्धस्तदवच्छेदकस्तादात्म्यस्यैव तदवच्छेदकत्वादित्यव्याप्तिस्तदवस्थेति वाच्यम् । अत्यन्ताभावाभावस्य प्रतियोगिरूपत्वेन घटभेदस्य घटभेदात्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभावरूपतया घटभेदात्यन्ताभावरूपस्य घटभेदप्रतियोगितावच्छेदकीभूतघटत्वस्यापि समवायसम्बन्धेन घटभेदप्रतियोगित्वात् । नचान्यत्रात्यन्ताभावाभावस्य प्रतियोगिरूपत्वेऽपि घटादिभेदात्यन्ताभावत्वावच्छिन्नाऽभावो न घटादिभेदस्वरूपः, किन्तु तत्प्रतियोगितावच्छेदकीभूतघटत्वात्यन्ताभावस्वरूप एवेति सिद्धान्त इति वाच्यम् ।

यथा हि घटत्वावच्छिन्नघटवत्ताग्रहे घटात्यन्ताऽभावाग्रहात् घटात्यन्ताभावाभावव्यवहाराच्च घटात्यन्ताऽभावाभावो घटस्वरूपस्तथा घटभेदवत्ताग्रहे घटभेदात्यन्ताभावाग्रहात् घटभेदात्यन्ताभावाभावव्यवहाराच्च घटभेद एव तदत्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभाव इति तत्सिद्धान्तो न युक्ति सह इति । विनिगमकाभावेनापि घटत्वत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावाभाववद् घटभेदस्यापि घटभेदात्यन्ताभावाभावत्वसिद्धेरप्रत्यूहत्वाच्च । (३) अत एव तादृशसिद्धान्तो न (४)उपाध्यायसम्मतः ।

---

(१) घटत्वादिरूप इति । अन्योन्याभावाभावस्य प्रतियोगितावच्छेदकस्वरूपत्वादिति भावः ।

(२) यदि अन्योन्याभावाभावस्य प्रतियोगिरूपत्वमेव स्यात्तदा नोक्तस्थलेऽव्याप्तिरत आह—नवेति । तथा च घटभिन्नं घटत्वत्वादित्यत्राव्याप्तिः स्यादिति भावः ।

(३) अत एवेति । विनिगमकाभावादेवेत्यर्थः ।

(४) उक्तसिद्धान्तो गंगेशोपाध्यायसम्मतो नेत्यर्थः

(१) अत एव च

(२) "अभावविरहात्मत्वं वस्तुनः प्रतियोगिता"

(३)इत्याचार्याः । (४)अन्यथा घटभेदात्यन्ताभावप्रतियोगिनि घटभेदे तल्लक्षणाव्याप्त्यापत्तेः । (५)अन्योन्याभावप्रतियोगितावच्छेदके तल्लक्षणस्यातिव्याप्त्यापत्तेश्च । नचैवं घटत्वत्वावच्छिन्नप्रतियोगिताकघटत्वात्यन्ताभावस्यापि घटभेदस्वरूपत्वापत्तिरिति वाच्यम् । तदत्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभावस्यैव तत्स्वरूपत्वाऽभ्युपगमात्, तद्बुद्धाग्रहे तादृशतदत्यन्ताभावाभावस्यैव व्यवहारात् ।

उपाध्यायै र्घटत्वत्वावच्छिन्नप्रतियोगिताकघटत्वाऽत्यन्ताभावस्य घटभेदस्वरूपत्वाऽभ्युपगमाच्च । नचैवं साध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेनैव साध्याभावाधिकरणत्वं विवक्ष्यतां किं साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तित्वस्य प्रतियोगिताविशेषणत्वेनेति वाच्यम् । (६) कालिकस-

---

(१) अत एवेत्यस्य अभावाभावस्य प्रतियोगिस्वरूपत्वादेवेत्यर्थः

(२) अभावेति । वस्तुनिष्ठं यत् प्रतियोगित्वन्तदभावविरहात्मत्वमभावाभावात्मकत्वमिति यावत् ।

(३) आचार्या इत्यस्यान्ते न्यायकुसुमांजलौ तृतीयस्तवक आहुरिति शेषः । एतत्कारिकापूर्वार्द्धन्तु—

"व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता" । इति

(४) अन्यथेत्यस्य अभावाभावस्य प्रतियोगिस्वरूपत्वाभाव इत्यर्थः ।

(५) अन्योन्याभावेत्यस्य घटान्योन्याभाव इत्यर्थः ।

(६) साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभाववृत्तित्वस्य

स्वन्धावच्छिन्नात्मत्वप्रकारकप्रमाविशेष्यत्वाभावस्य विशेषणता-विशेषेण साध्यत्वे आत्मत्वादिहेतावव्याप्त्यापत्तेः । कालिक-सम्बन्धावच्छिन्नसाध्याऽभावस्य विशेषणताविशेषेण योऽभावस्त-स्यापि साध्यस्वरूपतया ।कालिकसम्बन्धवद्विशेषणताविशेषो-ऽपि साध्यीयप्रतियोगितावच्छेदकसम्बन्धस्तेन सम्बन्धेनाऽऽत्मत्व-प्रकारकप्रमाविशेष्यत्वरूपसाध्याभाववत्यात्मनि हेतोरात्मत्वस्य वृत्तेः । (१)प्रतियोगितावच्छेदकवत् प्रतियोग्यप्यन्योन्याभावाभावः, तेन तादात्म्यसम्बन्धेन साध्यतायां साध्यताऽवच्छेदकसम्बन्धाऽ-वच्छिन्नसाध्याऽभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वस्य नाऽप्र-

---

साध्यसामान्यीयप्रतियोगिताविशेषणस्य फलमाह—कालिकेति । यद्यपि आत्म-त्वप्रकारिका या प्रमा तद्विशेष्यत्वं स्वरूपसम्बन्धेनाऽऽत्मनि वर्तते तथापि ( नि-त्येषु कालिकाऽयोगात् ) इति नियमात्कालिकसम्बन्धेन तादृशविशेष्यत्वाभावः स्वरूपेण वर्तत एवाऽऽत्मनीत्यस्य सद्धेतुत्वम् । अत्र साध्यतावच्छेदकसम्बन्धा-वच्छिन्नप्रतियोगिताकसाध्याभाववृत्तित्वाऽनुपादाने कालिकसम्बन्धावच्छिन्नप्रति-योगिताकसाध्याभावस्य स्वरूपेण योऽभावस्तस्यापि साध्यरूपतया तन्निरूपित-प्रतियोगितावच्छेदकसम्बन्धेन स्वरूपेण साध्याभाववत्यात्मनि हेतोर्वृत्तित्वेनाऽ-व्याप्तिः । तदुपादाने तु साध्यतावच्छेदकसम्बन्धेन स्वरूपेण साध्याभावस्य कालिकेन योऽभावः स एव साध्यरूपस्तन्निरूपितप्रतियोगितावच्छेदककालि-कसम्बन्धेन साध्याभाववति घटादौ हेतोरात्मत्वस्यावृत्तित्वाल्लक्षणसमन्वयः ।

( १ ) अयं घटवान्-एतत्त्वादित्यत्र, तादात्म्येन घटादेस्साध्यत्वेऽव्याप्तिः । तत्र साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य घटभेदस्य स्व-रूपसंबन्धेन योऽभावस्तस्य पूर्वोक्तनियमेन घटत्वरूपतया तत्र साध्यप्रतियोगिता-विरहेण साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वाप्रसिद्धेरतआह—प्रतियो-गितावच्छेदकवदिति ।

सिद्धिः । (१) इत्थञ्चाऽत्यन्ताभावत्वनिरूपितत्वेनापि साध्यसामान्यीयप्रतियोगिता विशेषणीया, (२) अन्यथा घटान्योन्याभाववान् घटत्ववत्वादित्यादावव्याप्त्यापत्तेः । तादात्म्यसम्बन्धस्यापि साध्याऽभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकत्वात् ।

(३) यद्वा साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तिसाध्यसामान्यीय (४) निरुक्तप्रतियोगित्व-तदवच्छेदकत्वान्यतरावच्छेदकसम्बन्धेनैव साध्याऽभावाऽधिकरणत्वं विवक्षणीयम् । वृत्त्यन्तमन्यतरविशेषणम् । एवञ्च घटान्योन्याभाववान् पटत्वादित्यादौ साध्याऽभावस्य घटत्वादेः साध्यीयप्रतियोगित्वविरहेऽपि न क्षतिः, तादृशान्यतरस्य साध्यीयप्रतियोगितावच्छेदकत्वस्यैव तत्र सत्त्वात् । न च तथापि कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिरिति वाच्यम् । निरुक्तसाध्याऽभावत्वविशिष्टनिरूपिता या निरुक्तसम्बन्धसंसर्गकनिरवच्छिन्नाऽधिकरणता तदाश्रयाऽवृत्तित्वस्य विवक्षितत्वात् । गुणकर्म्माऽन्यत्वविशिष्टसत्त्वाऽभाववान् गुणत्वादित्यादौ सत्त्वात्मकसाध्याभावाधिकरणत्वस्य गुणादिवृत्तित्वेऽपि साध्याभावत्वविशिष्टनिरूपिताधिकरणत्वस्य गुणाद्यवृत्तित्वान्नाऽव्याप्तिः । नचैवं कपिसंयोगाभाववान् सत्त्वादित्यादौ निरवच्छिन्नसाध्याऽभावाऽधिकरणत्वाऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । केवलान्वयिन्यभावादित्यनेन ग्रन्थकृतैवाऽस्य दोषस्य

(१) इत्थञ्चेति अन्योन्याभावस्य प्रतियोगिस्वरूपत्वांगीकारपक्षे इत्यर्थः ।

(२) अन्यथेति । अत्यन्ताभावत्वनिरूपितत्वाप्रवेश इत्यर्थः ।

(३) ननु भावपदार्थात्यन्ताभावाभावो भवतु प्रतियोगिस्वरूपः अन्योन्याभावाभावाभावो न भेदरूपप्रतियोगिस्वरूपोऽपि तु भेदप्रतियोगितावच्छेदकात्यन्ताभावरूप एवेत्यन्योन्याभावसाध्यकस्थले सर्वत्रैवाव्याप्तिरित्यरुचेराह—यद्वेति ।

[४] निरुक्तेत्यस्यात्यन्ताभावनिरूपितत्वमर्थः ।

वक्ष्यमाणत्वात् । न च तथापि कपिसंयोगिभिन्नं गुणत्वादित्यादौ निरवच्छिन्नसाध्याऽभावाधिकरणत्वाऽप्रसिद्ध्याऽव्याप्तिः, अन्योन्याभावस्य व्याप्यवृत्तित्वनियमवादिनये तस्य (१)केवलान्वय्यन्तर्गतत्वादिति वाच्यम् । अन्योन्याभावस्य व्याप्यवृत्तितानियमवादिनये अन्योन्याभावान्तरात्यन्ताभावस्य प्रतियोगितावच्छेदकस्वरूपत्वेऽप्यव्याप्यवृत्तिमदन्योन्याभावाभावस्य व्याप्यवृत्तिस्वरूपस्याऽतिरिक्तस्याऽभ्युपगमात् । तच्च (२)अग्रे स्फुटीभविष्यति ।

ननु तथापि समवायादिना गगनादिहेतुके इदं वह्निमद् गगनादित्यादावतिव्याप्तिः, वह्न्याभाववति हेतुतावच्छेदकसमवायादि सम्बन्धेन गगनादेरवृत्तेः । न च तल्लक्ष्यमेव हेतुतावच्छेदकसम्बन्धेन (३)पक्षधर्मत्वाभावाच्चाऽसद्धेतुत्वव्यवहार इति वाच्यम् । तत्रापि व्याप्तिभ्रमेणैवाऽनुमितेरनुभवसिद्धत्वात् । (४)अन्यथा धूमवान् वह्नेरित्यादेरपि लक्ष्यत्वस्य सुवचत्वात् । (५) एवं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादावव्याप्तिः, विशिष्टसत्त्वस्य केवलसत्त्वानतिरेकितया द्रव्यत्वाभाववत्यपि गुणादौ तस्य वृत्तेः, गुणे गुणकर्मान्य-

[ १ ] प्राचाम्मते कपिसंयोगिभेदस्य व्याप्यवृत्तितया गुणादावेव वृत्तित्वं नतु द्रव्ये तथा च सप्तपदार्थवृत्तित्वाभावेन कपिसंयोगिभेदस्य न केवलान्वयित्वमिति भावः ।

[ २ ] अग्रे-चतुर्थलक्षणव्याख्यानावसरे इत्यर्थः ।

[ ३ ] पक्षधर्मत्वाभावादित्यस्य पक्षवृत्तित्वाभावादित्यर्थः ।

[ ४ ] अन्यथेति । अयमाशयः—यदि हेतुतावच्छेदकसंबन्धेन पक्षवृत्तित्वाभाव एवासद्धेतुत्वनियामकस्तर्हि धूमवान् वन्हेरित्यादौ वन्ह्यादिहेतोरप्यसद्धेतुत्वं न स्यात् हेतुतावच्छेदकसंबन्धेन पक्षावृत्तित्वाभावात् । तथा च सुतरां तस्य लक्ष्यत्वापत्तिरिति भावः ।

( ५ ) आपत्तिस्वरूपातिव्याप्त्यपेक्षयाऽनुपपत्तिरूपाऽव्याप्तेः प्रबलदोषत्वाल्लक्षणस्याऽव्याप्तिमाह—एवमिति ।

त्वविशिष्टसत्तेति प्रतीतेः सर्वसिद्धत्वात् । (१)सत्तावान् द्रव्यत्वादित्यादावव्याप्तिश्च, सत्ताभाववति सामान्यादौ हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तेरप्रसिद्धेरिति चेन्न । हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणता (२)प्रतियोगिकहेतुतावच्छेदकसम्बन्धावच्छिन्नाऽऽधेयतानिरूपितविशेषणताविशेषसम्बन्धेन (३)निरुक्तसाध्याभावत्वविशिष्टनिरूपित (४)निरुक्तसम्बन्धसंसर्गकनिरवच्छिन्नाऽधिकरणताऽऽश्रयवृत्तित्वसामान्याभावस्य विवक्षितत्वात् । वृत्तित्वञ्च न हेतुतावच्छेदकसम्बन्धेन विवक्षणीयम् । (५) अस्ति च सत्तावान् द्रव्यत्वादित्यादौ सत्ताऽभावाधिकरणताश्रयवृत्तित्वस्य हेतुतावच्छेदकसमवायसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धेन सामान्याभावो द्रव्यत्वादौ, समवायसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावाधिकरणत्वाश्रयवृत्तित्वाभावस्य व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावतया संयोगसम्बन्धावच्छिन्नगुणाभावादेरिव

(१) (विशिष्ट सत्वं शुद्धसत्वादतिरिक्तम्) इतिमते न पूर्वोक्ताऽव्याप्तिस्संभवति, साध्याभाववति गुणे शुद्धसत्वातिरिक्तस्य विशिष्टसत्वस्यावर्त्तमानत्वादतोऽव्याप्त्यन्तरमाह—सत्तावानिति ।

(२) प्रतियोगिकेत्यस्य निरूपितेत्यर्थः, इदमाधेयताविशेषणम् । आधेयता निरूपितेत्यत्र निरूपितत्वपदार्थः प्रतियोगिकत्वम् । एवमग्रेऽपि ।

(३) निरुक्तेत्यस्य साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकेत्यर्थः ।

(४) निरुक्तेत्यस्य साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववृत्ति साध्यसामान्यीयप्रतियोगित्व-तदवच्छेदकत्वान्यतरेत्यर्थः ।

(५) सत्तावान् द्रव्यत्वादित्यत्राव्याप्तिं निवारयति—अस्ति चेति ।

केवलान्वयित्वात् । (१)द्रव्यं सत्त्वादित्यादौ च द्रव्यत्वाभावाधिकरणगुणादिवृत्तित्वस्यैव समवायसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धेन सत्तायां सत्वान्नातिव्याप्तिः । द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिवारणाय प्रतियोगिकान्तमाधेयताविशेषणम् । (२)वस्तुतस्तु–एतल्लक्षणकर्त्तृमते । विशिष्टसत्त्वं विशिष्टनिरूपिताधारतासम्बन्धेनैव द्रव्यत्वव्याप्यं, न तु समवायसम्बन्धेन । तथाच प्रतियोगिकान्तमाधेयताविशेषणमनुपादेयमेव, तदुपादाने हेतुतावच्छेदकभेदेन कार्य्यकारणभावभेदापत्तेः । (३) हेतुतावच्छेदकसम्बन्धेन सम्बन्धित्वे सतीत्यनेनापि विशेषणाद्वह्निमान् गगनादित्यादौ नातिव्याप्तिः ।

ननु तथापि उभयत्वमुभयत्रैव पर्य्याप्तं, न त्वेकत्रेति सिद्धान्तादरे घटत्वतदभाववदुभयत्वादित्यादौ पर्य्याप्त्याख्यसम्बन्धेन हेतुत्वेऽतिव्याप्तिः, घटत्वाभाववति हेतुतावच्छेदकपर्य्याप्त्याख्यसम्बन्धेन हेतोरवृत्तेः । घटो न घटपटोभयमितिवत् घटत्वाभाववान् न घटत्वतदभाववदुभयमित्यपि प्रतीतेरिति चेन्न । तादृशसिद्धान्तादरे हेतुतावच्छेदकसम्बन्धेन साध्यसमानाधिकरणत्वे सतीत्यनेनैव विशेषणीयत्वादिति । (४) अत एव निविशतां वा वृत्तिमत्त्वं साध्यसमानाधिकरणत्वं वेति केवलान्वयिग्रन्थे **दीधितिकृतः** ।

---

(१)अस्मिन् प्रकारेऽतिव्याप्तिरपि न संभवतीत्याह-द्रव्यं सत्वादित्यादि

(२) लाघवमनुसृत्याह—वस्तुतस्त्विति ।

(३) वन्हिमान् गगनादित्यत्रातिव्याप्तिं निराकरिष्णुराह-हेतुतावच्छेदकसंबन्धेनेति । साध्याभाववदवृत्तित्वमितिलक्षणे हेतुतावच्छेदकसंबन्धेन संबन्धित्वे सतीति विशेषणीयमित्यर्थः ।

(४) उभयत्वमुभयत्रैव पर्याप्तमिति सिद्धान्तादरे घटत्ववान् तादृशोभयत्वादित्यत्रातिव्याप्तेरेवेत्यर्थः ।

(१)केचित्तु-निरुक्तसाध्याभावत्वविशिष्टनिरूपिता या विशेषणताविशेषसम्बन्धेन यथोक्तसंबन्धेन वा निरवच्छिन्नाधिकरणता तदाश्रयव्यक्त्यवर्त्तमानं हेतुतावच्छेदकसम्बन्धावच्छिन्न यद्धर्म्मावच्छिन्नाधिकरणत्वसामान्यं तद्धर्म्मवत्त्वं विवक्षितम् । (२) धूमवान् वह्नेरित्यादौ पर्वतादिनिष्ठवह्न्यधिकरणताव्यक्तेर्धूमाभावाधिकरणावृत्तित्वेऽप्ययोगोलकनिष्ठवह्न्यधिकरणताव्यक्तेरतथात्वान्नातिव्याप्तिरित्याहुः ।

(३)अन्ये तु-हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नस्वाधिकरणताश्रयवृत्ति यन्निरवच्छिन्नाधिकरणत्वं तदवृत्तिनिरुक्तसाध्याभावत्वविशिष्टनिरूपितयथोक्तसम्बन्धावच्छिन्नाधिकरणतात्मकत्वमिति (४)विशेषणविशेष्यभावव्यत्यासे तात्पर्य्यम् स्वपदं

(१) सत्तावान् द्रव्यत्वात् द्रव्यं विशिष्टसत्वादित्यादौ पूर्वोक्तामव्याप्तिं निराचिकीर्षूणां केषांचिन्मतमाह—केचित्त्विति । वन्हिमान् धूमादित्यादौ तत्समन्वयश्चेत्थम् । संयोगसम्बन्धावच्छिन्नवन्हित्वावच्छिन्नप्रतियोगिताकाऽभावत्वावच्छिन्ना या स्वरूपसम्बन्धावच्छिन्नाऽऽधेयता तन्निरूपितनिरवच्छिन्नाधिकरणताश्रयीभूतह्रदव्यक्त्यवर्तमानं संयोगसम्बन्धावच्छिन्नयद्धर्मा ( धूमत्वा ) वच्छिन्नाऽऽधेयतानिरूपिताधिकरणत्वसामान्यं तद्धर्म ( धूमत्व ) वत्त्वं धूमे इति ।

[ २ ] सामान्यपदकृत्यमाह—धूमवानिति ।

[ ३ ] कपिसंयोगाभाववान् मेयत्वात् कपिसंयोगिभिन्नं गुणत्वादित्यादौ लक्षणं समन्वेतुं परिष्करोति—अन्ये त्विति । अत्र स्वपद मधिकरणतात्वकत्वमित्यत्राधिकरणताकपदं च हेतुपरम्, तथा च धूमाधिकरणताश्रयपर्वतवृत्ति यन्निरवच्छिन्नं रूपाद्यधिकरणत्वं तत्र वन्ह्यभावाद्यधिकरणतात्वस्यावर्त्तमानत्वाद्वह्निमान् धूमादित्यादौ लक्षणसमन्वयः ।

४ विशेषणेति । पूर्वोक्तकेचित्त्वितिकल्पे यादृशो विशेषणविशेष्यभावस्तस्मादत्र लक्षणे विपरीतो विशेषणविशेष्यभावो बोध्य इति तात्पर्यम् ।

हेतुपरम्।(१)इत्थञ्च कपिसंयोगाभाववान् सत्वात् कपिसंयोगिभिन्नं गुणत्वादित्यादावपि नाऽव्याप्तिरित्याहुरिति संक्षेपः।

लक्षणान्तरमाह,

**साध्यवद्भिन्न साध्याभाववदवृत्तित्वम् ।**

साध्यवद्भिन्नो यः साध्याभाववान् तदवृत्तित्वमित्यर्थः । कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यकाव्याप्तिवारणाय [साध्यवद्भिन्नेति ] साध्याभाववतो विशेषणमिति प्राञ्चः । तदसत् [ साध्याभाववत् ] इत्यस्य व्यर्थतापत्तेः साध्यवद्भिन्नावृत्तित्वमित्यस्यैव सम्यक्त्वात् ।

नव्यास्तु-साध्यवद्भिन्ने :साध्याभावः साध्यवद्भिन्नसाध्याभावस्तद्वदवृत्तित्वमिति सप्तमीतत्पुरुषोत्तरं मतुप्प्रत्ययः । तथा च साध्यवद्भिन्नवृत्तिर्यः साध्याभावस्तद्वदवृत्तित्वमित्यर्थः । एवञ्च साध्यवद्भिन्नवृत्तीत्यनुक्तौ संयोगी द्रव्यत्वादित्यादावव्याप्तिः । संयोगाभाववति द्रव्ये द्रव्यत्वस्य वृत्तेः । तदुपादाने च संयोगवद्भिन्नवृत्तिः संयोगाभावो गुणादिवृत्तिः संयोगाभाव एव, अधिकरणभेदेनाभावभेदात्, तद्वदवृत्तित्वान्नाऽव्याप्तिः । न च तथापि साध्यवद्भिन्नावृत्तित्वमित्येवास्तु लक्षणं किं साध्याभाववदित्यनेनेति वाच्यम् । यथोक्तलक्षणे तस्याप्रवेशेन [२]वैयर्थ्याभावात्, तस्यापि लक्षणान्तरत्वात् । न च तथापि साध्यवद्भिन्नवृत्तिर्य-

(१) विशेषणविशेष्यभावव्यत्यासस्य प्रयोजनमाह-इत्थञ्चेति ।

(२) वैयर्थ्यं नाम स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकलघुभूतधर्मान्तरघटितत्वम् । यथा नीलधूमत्वं धूमत्वघटितम् प्रकृते तु साध्यवद्भिन्ननिरूपित वृत्तित्वाभावः साध्यवद्भिन्नवृत्तिसाध्याभावाधिकरणनिरूपित वृत्तित्वाभावश्च मिथो भिन्न एवाभावः । तथाच न द्वयोरभावत्वयो मिथः सामानाधिकरण्यं येन वैयर्थ्यं स्यादिति भावः ।

स्तद्वदवृत्तित्वमेवास्तु किं साध्याभावपदेनेति वाच्यम् । तादृश-द्रव्यत्वादिमद्वृत्तित्वादसम्भवापत्तेः । साध्याभावेत्यत्र साध्यपदम् [१] अत एव, द्रव्यत्वादेरपि द्रव्यत्वाभावाभावत्वात् । भावरूपाभावस्य चाधिकरणभेदेन भेदाभावात् ।

नन्ु तथापि घटाकाशसंयोग-घटत्वान्यतराभाववान् गगन-त्वादित्यादौ घटानधिकरणदेशावच्छेदेन घटाकाशसंयोगाभावस्य गगने सत्त्वात् सद्धेतुतयाऽव्याप्तिः, साध्यवद्भिन्ने घटे वर्त्तमानस्य साध्याभावस्य घटाकाशसंयोगरूपस्य गगनेऽपि सत्त्वात् तत्र च हेतोर्वृत्तेः । न च साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववत्त्वं विव-क्षितमिति वाच्यम् । साध्याभावपदवैयर्थ्यापत्तेः । साध्यवद्भिन्न-वृत्तित्वविशिष्टवदवृत्तित्वस्यैव सम्यक्त्वादिति चेन्न । अभा-वाभावस्यातिरिक्तत्वमतेनैतल्लक्षणकरणात् । तथा च अधिकरण-भेदेनाभावभेदात् साध्यवद्भिन्ने घटे वर्त्तमानस्य साध्याभावस्य (२)प्रतियोगिव्यधिकरणस्य प्रतियोगिमति गगनेऽसत्त्वादव्याप्तेरभा-वात् । न चैवं साध्याभावेत्यत्र साध्यपदवैयर्थ्यम् (३)अभावाभाव-

[१] अत एवेति । द्रव्यत्वमादायासंभवादेवेत्यर्थः ।

(२) प्रतियोगिव्यधिकरणस्येति । घटे वर्त्तमानो यो घटत्व--घटाका-शसंयोगान्यतराभावाभावः स प्रतियोगिव्यधिकरणः गगने च यस्तादृशाभावस्स प्रतियोगिसमानाधिकरणः यतो गगनेऽन्यतराभावोऽपि वर्त्तते । तथाच विरुद्ध-धर्माध्यासेन घटत्वघटाकाशसंयोगान्यतराभावाभावस्याधिकरणभेदेन भेदः स्वीकार्यः तथा सति साध्यवद्भिन्ने घटे वर्तमानस्य साध्याभावस्याधिकरणं घट एव तत्र गगनत्वहेतोरवर्तमानत्वाल्लक्षणसमन्वयः ।

(३) अभावेति । अभावाभावाभावस्यातिरिक्तत्वेन द्रव्यत्वाभावाभावो न द्रव्यत्वरूपः किन्त्वतिरिक्तोऽभावस्तस्याधिकरणं साध्यवद्भिन्नो ह्रदादिरेव, अधिकरणभेदेनाभावभेदात् तत्र च धूमस्यावर्त्तमानत्वाद्वह्निमान् धूमादित्यत्र लक्षणसमन्वयसंभवात्साध्यपदं व्यर्थमिति भावः ।

स्यातिरिक्तत्वेन द्रव्यत्वादेरभावत्वाभावात् साध्यवद्भिन्नवृत्तिघटा-भावादेस्तु हेतुमत्यसत्त्वात् अधिकरणभेदेनाऽभावभेदादिति वाच्यम्। यत्र प्रतियोगिसमानाधिकरणत्व-प्रतियोगिव्यधिकरणत्व-लक्षणविरुद्धधर्माध्यासस्तत्रैवाऽधिकरणभेदेनाऽभावभेदाभ्युपगमो तु सर्वत्र। तथा च साध्यवद्भिन्नवृत्तिघटाभावादेर्हेतुमत्यपि सत्त्वा-दसम्भववारणाय साध्यपदोपादानात्।

(१) यद्वा घटाकाशसंयोग-घटत्वान्यतराभावाभावोऽतिरिक्त एव घटाकाशसंयोगादीनामननुगततया तथात्वस्य वक्तुमशक्यत्वात्। घटत्वद्रव्यत्वाद्यभावाभावस्तु नातिरिक्तो घटत्वद्रव्यत्वादीनामप्य-नुगतत्वात्। तथा च द्रव्यत्वादिकमादायासम्भववारणायैव साध्य-पदमिति प्राहुरित्यास्तां विस्तरः।

साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकर-ण्यम्।

हेतौ साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणवृत्तित्वाभाव इत्यर्थः। (२) अन्योन्याभावश्च प्रतियोग्यवृत्तित्वेन विशेषणी-

---

(१) ननु न सर्वोऽप्यभावाभावोऽतिरिक्तः अपि तु घटत्वघटाकाशसंयोगा-न्यतराभावाभाव एव तस्य प्रतियोगिस्वरूपत्वेऽननुगमरूपगौरवात्। तथा च द्रव्यत्वाभावाभावमादायासंभववारणाय साध्यपदस्य यथाश्रुतमपि सार्थक्यं संभवतीत्याशयेनाह—यद्वेति।

(२) ननु वन्हिमद्घटोभयं नेत्याकारकं साध्यवत्प्रतियोगिकमन्योन्याभावमा-दाय वन्हिमान् धूमादित्यादावसंभव एव स्यादत आह अन्योन्याभावश्चेति। तथा च व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकान्योन्याभावस्य केवलान्वयित्वे-न प्रतियोगिवृत्तित्वात्तद्वारणम्। व्यासज्यवृत्तित्वं नाम—एकत्वानवच्छिन्नानुयो-गिताकपर्याप्तिप्रतियोगित्वम्।

यस्तेन साध्यवतो व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकान्योन्याभाववति हेतोर्वृत्तावपि नाऽसम्भवः । नन्वेवमपि नानाधिकरणकसाध्यके वन्हिमान् धूमादित्यादौ साध्याधिकरणीभूततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकान्योन्याभाववति हेतोर्वृत्तेरव्याप्तिर्दुर्वारेति । प्रतियोग्यवृत्तित्वमपहाय साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावविवक्षणे तु पञ्चमेन सह पौनरुक्त्यमिति चेन्न । वक्ष्यमाणकेवलान्वय्यव्याप्तिवदस्याप्यत्र दोषत्वात् । न च तथापि साध्यवत्प्रतियोगिकान्योन्याभावमात्रस्यैवैतल्लक्षणघटकत्वे वक्ष्यमाणकेवलान्वय्यव्याप्तिरत्रासङ्गता, केवलान्वयिसाध्यकेऽपि साध्याधिकरणीभूततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकान्योन्याभावस्य प्रसिद्धत्वादिति वाच्यम् । तत्रापि तादृशान्योन्याभावस्य प्रसिद्धत्वेऽपि तद्वति हेतोर्वृत्तेरेवाऽव्याप्तेर्दुर्वारत्वात् ।

यद्वा (१) साध्यवत्प्रतियोगिकान्योन्याभावपदेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभाव एव विवक्षितः । न चैवं पञ्चमाभेदः, तत्र साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभाववत्त्वेन प्रवेशः । अत्र तु तादृशान्योन्याभावाधिकरणत्वेन इत्यधिकरणत्वप्रवेशाप्रवेशाभ्यामेव भेदात् । (२)अखण्डाभावघटकतया च नाधिकरणत्वांशस्य वैयर्थ्यमिति न कोऽपि दोष इति दिक् ।

---

(१) साध्याभाव-साध्यवदन्योन्याभावयोरप्रसिद्ध्यैव केवलान्वयिसाध्यकस्थलेऽव्याप्तिर्दत्ता मूलकारेण साऽत्र न सङ्गच्छत इत्यस्वरसं मनसि कृत्वाह-यद्वेति ।

(२)अखण्डाभावेत्यस्यातिरिक्ताभावेत्यर्थः । तथा च अधिकरणत्वघटिततादृशाभावत्वस्य अधिकरणत्वाघटिततादृशाभावत्वस्य च मिथः सामानाधिकरण्याभावान्न पूर्वोक्तवैयर्थ्यमिति भावः ।

सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम् ।

साकल्यं साध्याभाववतो विशेषणं ( १ )तथा च यावन्ति साध्याभावाधिकरणानि तन्निष्ठाभावप्रतियोगित्वं हेतो र्व्याप्तिरित्यर्थः। (२)धूमाद्यभाववज्जलह्रदादिनिष्ठाभावप्रतियोगित्वाद्वह्न्यादावतिव्याप्तिरिति यावदिति साध्याभाववतो विशेषणम् । (३)साध्याभावविशेषणत्वे ( ४ ) तत्तद्ह्रदावृत्तित्वादिरूपेण यो वन्ह्याद्यभावस्तस्यापि सकलसाध्याभावत्वेन प्रवेशात् तावदधिकरणाप्रसिद्ध्याऽसम्भवापत्तेः। न च द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाभाववति गुणादौ (५)सत्त्वादे र्विशिष्टाभावादिसत्वादतिव्याप्तिरिति वाच्यम् । (६)तादृ

( १ ) साकल्यस्य साध्याभावाधिकरणे विशेषणत्वे सति यादृशी लक्षणाऽऽकृतिः सम्पन्ना तान्दर्शयति--तथा चेति ।

( २ )साध्याभावाधिकरणे साकल्यविशेषणस्य प्रयोजनमाह—धूमाद्यभाववदिति ।

( ३ ) साध्याभावाधिकरणे साकल्यविशेषणस्यातिव्याप्तिवारणमेव प्रयोजनं तत्तु प्रथमोपस्थित-साध्याभावे साकल्यविशेषणेनापि सम्भवतीत्याशङ्कामसम्भवेनापाकरोति—साध्याभावविशेषणत्व इति !

(४) तत्तद्ध्रदावृत्तित्वेति । इदमाकूतम्, वन्हिरपि तत्तद्ध्रदावृत्तिस्तस्य च यस्तत्तद्ध्रदावृत्तिर्नास्तीत्याकारकाभावः सच लाघवात्तत्तद्ध्रदत्वादिरूपस्तेषां च मिलितानामधिकरणमप्रसिद्धमित्यसम्भवः । अत्रादिपदेन घटावृत्तित्व-महानसावृत्तित्वादिपरिग्रहः ।

( ५ ) सत्वादेर्विशिष्टेति । गुणकर्मान्यत्वविशिष्टसत्वाभाव इत्यर्थः ! आदिना सत्वघटोभयाभावादिपरिग्रहः ।

( ६ ) तादृशाभावेति । सकलसाध्याभाववन्निष्ठाभावेत्यर्थः । प्रतियोगितावच्छेदकहेतुतावच्छेदकादिपाठस्य प्रतियोगितावच्छेदकतापर्याप्त्यधिकरण-हेतुतावच्छेदकतापर्याप्त्यधिकरणत्वे ततऽप्यधिके वा तात्पर्यम् !

श्चाभावप्रतियोगितावच्छेदकहेतुतावच्छेदकवत्त्वस्येह विवक्षितत्वात् । प्रतियोगिता च हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या । तेन द्रव्यत्वाभाववति गुणादौ सत्ताऽदेः संयोगादिसम्बन्धावच्छिन्नाभावसत्त्वेऽपि नातिव्याप्तिः । साध्याभावश्च साध्यतावच्छेदकावच्छिन्न–साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । अन्यथा पर्वतादावपि वह्न्यादे (१)र्विशिष्टाभावादिसत्त्वेन समवायादिसम्बन्धावच्छिन्नवह्न्यादिसामान्याभावसत्वेन च यावदन्तर्गततया तन्निष्ठाभावप्रतियोगित्वाभावात् धूमस्याऽसम्भवः स्यात् । न च कपिसंयोगी एतद्वृक्षत्वात् इत्यादौ एतद्वृक्षस्यापि (२)तादृशसाध्याभाववत्वेन यावदन्तर्गततया तन्निष्ठाभावप्रतियोगित्वाभावादेतद्वृक्षत्वस्याव्याप्तिरिति वाच्यम् । किञ्चिदनवच्छिन्नाया साध्याभावाधिकरणताया इह विवक्षितत्वात् । (३)इत्थञ्च किञ्चिदनवच्छिन्नायाः कपिसंयोगाभावाधिकरणताया गुणादावेव सत्त्वात् तत्र च हेतोरप्यभावसत्त्वान्नाव्याप्तिः । न च कपिसंयोगाभाववान् सत्वादित्यादौ साध्याभावस्य कपिसंयोगादेर्निरवच्छिन्नाधिकरणत्वाप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । केवलान्वयिन्यभावादित्यनेन ग्रन्थकृतैवैतद्दोषस्य वक्ष्यमाणत्वात् । न च पृथिवी कपिसंयोगादित्यादौ पृथिवीत्वाभाववति जलादौ यावत्येव कपिसंयोगा-

---

(१) विशिष्टेति । महानसीयत्वादिविशिष्टवन्ह्यभाव इत्यर्थः । आदिना वन्हिजलोभयाभावोपग्रहः ।

(२) तादृशेत्यस्य । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नेत्यर्थः ।

(३) इत्थञ्चेत्यस्य, किञ्चिदनवच्छिन्नसाध्याभावाधिकरणत्वविवक्षणे चेत्यर्थः ।

भावसत्त्वादतिव्याप्तिरितिवाच्यम्। तन्निष्ठपदेन (१)तत्र निरवच्छिन्न वृत्तिमत्त्वस्य विवक्षितत्वात्। (२)इत्थञ्च पृथिवीत्वाभावाधिकरणे जलादौ यावदन्तर्गते निरवच्छिन्नवृत्तिमानभावो न कपिसंयोगाभावः किन्तु घटत्वाद्यभाव एव तत्प्रतियोगित्वस्य हेतावसत्त्वान्नातिव्याप्तिः। न (३)चैवमन्योन्याभावस्य (४)व्याप्यवृत्तितानियमनये द्रव्यत्वाभाववान् संयोगवद्भिन्नत्वादित्यादेरपि सद्धेतुतया तत्राव्याप्तिः, संयोगवद्भिन्नत्वाभावस्य संयोगरूपस्य निरवच्छिन्नवृत्तेरप्रसिद्धेरिति वाच्यम्। अन्योन्याभावस्य व्याप्यवृत्तितानियमनये (५)ऽन्योन्याभावस्याऽभावो न प्रतियोगितावच्छेदकस्वरूपः किन्त्वतिरिक्तो व्याप्यवृत्तिः, (६)अन्यथा मूलावच्छेदेन कपिसंयोगिभेदाभावभानानुपपत्तेरिति संयोगवद्भिन्नत्वाभावस्य निरवच्छिन्नवृत्तिमत्त्वात्। (७)वस्तुतस्तु सकलपदमत्राशेषपरं, न

(१) तत्र-यावति निरवच्छिन्नसाध्याभावाधिकरणे।

(२) अत्रेत्थञ्चेत्यस्य। सकलसाध्याभावाधिकरणे निरवच्छिन्नवृत्तिकाभावनिवेशे चेत्यर्थः।

(३) नचैवमित्यत्रैवमित्यस्य हेत्वभावे निरवच्छिन्नवृत्तिमत्त्वनिवेशे चेत्यर्थः।

(४) ननु संयोगवद्भिन्नत्वस्य पृथिव्यामेव व्यभिचारितया तत्र लक्षणाऽसत्त्वमिष्टमेवेत्याशंकामपाकुर्वन्नाह—व्याप्यवृत्तितानियमेति।

(५)अन्योन्याभावस्याभाव इति। अव्याप्यवृत्तिमदन्योन्याभावस्याभाव इत्यर्थः।

[६] अन्यथेति। अव्याप्यवृत्तिमदन्योन्याभावाभावस्यातिरिक्तत्वाऽभाव इत्यर्थः। यदि कपिसंयोगिभेदाभावः कपिसंयोगरूपः स्यात्तर्हि वृक्षे मूले तत्प्रतीतिरप्रमा स्यात् तत्र कपिसंयोगासत्त्वात्। अत्र मूलदेशस्यावच्छेदकं स्वरूपसम्बन्धविशेषरूपं बोध्यम्।

(७) यत्रैकमेव साध्याभावाधिकरणं तत्र सकलसाध्याभावाधिकरणाऽप्रसिद्ध्याऽव्याप्तिमाशंक्याह—वस्तुतस्त्विति।

त्वनेकपरम्, एतद्घटत्वाभाववान् पटत्वादित्याद्येकव्यक्तिविपक्षके साध्याभावाधिकरणस्य यावत्त्वाप्रसिद्ध्याऽव्याप्त्यापत्तेः । ( १ ) तथाच किञ्चिदनवच्छिन्नाया [ २ ]निरुक्तसाध्याभावाधिकरणतायाः व्यापकीभूतो योऽभावः हेतुतावच्छेदकसम्बन्धावच्छिन्नतत्प्रतियोगितावच्छेदकहेतुतावच्छेदकवत्त्वं लक्षणार्थः । न च सत्त्वाद्दिसामान्याभावस्यापि प्रमेयत्वादिना निरुक्तसाध्याभावाधिकरणतायाः ( ३ )व्यापकत्वात् द्रव्यं सत्त्वादित्याद्यावतिव्याप्तिः । ( ४ ) तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं व्यापकत्वमित्युक्तौ तु निर्धूमत्ववान् निर्वह्नित्वादित्यादावव्याप्तिः निर्वह्नित्वाभावानां

---

[ १ ] सकलपदस्याशेषार्थकत्वे यादृशो लक्षणवाक्यार्थस्सञ्जातस्तं दर्शयति तथा चेति ।

[ २ ] निरुक्तेति । साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावेत्यर्थः ।

( ३ ) व्यापकत्वादिति । तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वमिति व्यापकत्वम् । तच्च द्रव्यं सत्त्वादित्यत्र द्रव्यत्वाभावाधिकरणतावद्गुणादिनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकप्रमेयत्ववत्त्वात्सत्ताऽभावस्याप्यस्तीति तत्प्रतियोगितावच्छेदकसत्तात्ववत्त्वात्सत्त्वस्येत्यतिव्याप्तिरिति भावः ।

( ४ ) तद्वन्निष्ठेति । तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं व्यापकत्वमिति व्यापकलक्षणे प्रकृते विवक्षिते तु द्रव्यं सत्वादित्यत्र सत्वाभावे-द्रव्यत्वाभावाधिकरणतावति गुणादौ सत्वाभाववान्नेतिप्रतीतिसिद्धान्योन्याभावप्रतियोगितावच्छेदकत्वस्यैव सत्वान्नातिव्याप्तिप्रसङ्गः । किन्तु ह्रदो निर्धूमत्ववान् निर्वह्नित्वादित्यत्राऽव्याप्तिदोषो बोध्यः । तथाहि निर्धूमत्वरूपसाध्याभावाधिकरणत्ववति पर्वतमहानसादौ ( चालनी न्यायेन ) निर्वह्नित्वाभाववान्नेतिप्रतीतिसिद्धान्योन्याभावप्रतियोगितावच्छेदक एव निर्वह्नित्वाभाव इति हेत्वभावस्य साध्याभावाधिकरणत्वाव्यापकत्वादिति भावः ।

वह्निव्यक्तीनां सर्वासामेव(चालनी न्यायेन)निर्धूमत्वाभावाधिकरण-तावन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वादिति वाच्यम् । (१)तादृशाधिकरणताया व्यापकतावच्छेदकं हेतुतावच्छेदकसम्बन्धा-वच्छिन्न (२)यद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वस्य विवक्षितत्वात्। (३)व्यापकतावच्छेदकत्वन्तु तद्वन्निष्ठात्यन्ताभावप्रतियोगितानव-च्छेदकत्वम् (४) न तु तद्वन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियो-गितानवच्छेदकत्वं तद्वति निरवच्छिन्नवृत्तिमान् योऽभावस्तत्प्र-तियोगितानवच्छेदकत्वं वा, प्रकृतव्यापकतायां प्रतियोगिवैयधिक-रण्यस्य निरवच्छिन्नवृत्तित्वस्य वा प्रवेशे प्रयोजनविरहात् (५)तेन पृथिवी कपिसंयोगादित्यादौ नातिव्याप्तिः, कपिसंयोगाभावत्वस्य (६) निरुक्तव्यापकतावच्छेदकत्वविरहादित्येव परमार्थः ।

---

(१) तादृशाधिकरणताया इति । साध्यतावच्छेदकसम्बन्धावच्छिन्न-साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावाधिकरणताया इत्यर्थः ।

[ २ ] यद्धर्मेति । यद्धर्म-तद्धर्मपदाभ्यां हेतुतावच्छेदकधर्मौ ग्राह्यः ।

( ३ ) व्यापकतावच्छेदकत्वन्त्विति । निर्धूमत्ववान् निर्वह्नित्वा दित्यत्र निर्धूमत्वाभावाधिकरणत्ववति महानसादौ वर्तमानो योऽभावः ( घटो नास्तीत्याकारकः ) तत्प्रतियोगितानवच्छेदकमेव निर्वह्नित्वत्वरूपयद्धर्मावच्छि-न्नप्रतियोगिताकाभावत्वं तद्धर्म [ निर्वह्नित्वत्व ] वत्त्वं निर्वह्नित्व इति लक्षणसमन्वयः ।

[ ४ ] नत्विति । प्रयोजनानुरोधेन व्यापकतावच्छेदकत्वशरीरे प्रतियो-गिवैयधिकरण्यस्य-स्वप्रतियोग्यधिकरणावृत्तित्वरूपस्य-निरवच्छिन्न वृत्तित्वस्य वा निवेशः क्वचिदस्ति, परन्त्वत्र प्रयोजनाभावान्न तन्निवेश इति भावः ।

( ५ ) तेनेति । प्रकृतव्यापकतायां प्रतियोगिवैयधिकरण्यस्य निरवच्छिन्न-त्वस्य वाऽप्रवेशेनेत्यर्थः ।

( ६ ) निरुक्तव्यापकतावच्छेदकत्वविरहादिति । यदत्र प्रतियोगि वैयधिकरण्य घटितं, निरवच्छिन्न वृत्तित्वघटितं वा व्यापकतावच्छेदकत्वमभिमतं-

साध्यवदन्यावृत्तित्वं वा ।

अत्रापि प्रथमलक्षणोक्तरीत्या हेतौ साध्यवदन्यवृत्तित्वाभाव इत्यर्थः । तादृशवृत्तित्वाभावश्च (१)तादृशवृत्तित्वसामान्याभावो बोध्यः । (२)तेन धूमवान् वन्हेरित्यादौ धूमवदन्यजलहृदादिवृत्तित्वाभावस्य धूमवदन्यवृत्तित्व-जलत्वोभयाभावस्य च हेतौ सत्त्वेपि नातिव्याप्तिः । साध्यवदन्यत्वञ्च अन्योन्याभावत्वनिरूपित-साध्यवत्त्वावच्छिन्न-प्रतियोगिताकाभाववत्वम् । (३)तेन वन्हिमान् धूमादित्यादौ तत्तद्वन्हिमदन्यस्मिन् धूमादे

---

स्यात्तदा पृथिवी कपिसंयोगादित्यत्रातिव्याप्तिस्स्यात् । पृथिवीत्वाभावाधिकरणत्ववति जलादिद्रव्ये वर्त्तमानो यः प्रतियोगिवैयधिकरण्यादिविशिष्टोऽभावः स न कपिसंयोगाभावाभावः किन्तु घटाद्यभाव एव तत्प्रतियोगितानवच्छेदकत्वस्य कपिसंयोगाभावत्वे सत्त्वात् । तदनिवेशे तु साध्याभावाधिकरणे जलादौ कपिसंयोगाभावाभावस्यापि सत्त्वात्तत्प्रतियोगितावच्छेदकमेव कपिसंयोगाभावत्वमिति नातिव्याप्तिरिति भावः ॥

(१) ननु धूमवदन्यह्रदनिरूपितवृत्तित्वाभावं, धूमवदन्यनिरूपितवृत्तित्वजलत्वोभयाभावञ्च साध्यवदन्यवृत्तिताप्रतियोगिकमादाय धूमवान् वह्नेरित्यत्रातिव्याप्तिरत आह—तादृशवृत्तित्वसामान्याभाव इति । साध्यवदन्यनिरूपितवृत्तित्वत्वेतरधर्मानवच्छिन्न -- तादृशवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभाव इति तदर्थः । उक्ताभावयोरतादृशत्वान्नातिव्याप्तिः । अत्र सामान्याभावपरिष्करणरीतिस्तु प्रथमलक्षणवदेव बोध्या ।

(२) तेन । तादृशवृत्तित्वसामान्याभावनिवेशेनेत्यर्थः

(३) साध्यत्वप्रतियोगिताकाऽभावं परित्यज्य साध्यवत्त्वावच्छिन्नप्रतियोगितानिवेशस्य व्यावृत्तिमाह—तेनेति ।

धूमस्य वृत्तावपि नाव्याप्तिः । (१)न वा वह्निमत्त्वावच्छिन्नप्रतियोगिताका-त्यन्ताभावस्य (२)स्वावच्छिन्नभिन्नभेदरूपस्य अधिकरणे पर्वतादौ धूमस्य वृत्तावप्यव्याप्तिः (३)तस्य साध्यवत्त्वावच्छिन्नप्रतियोगि-तायाः अत्यन्ताभावत्वनिरूपितत्वेन अन्योन्याभावत्वनिरूपितत्वविर-हात् । (४) अन्योन्याभावत्वनिरूपितत्वञ्च तादात्म्यसम्बन्धाव-च्छिन्नत्वमेव । (५)साध्यवत्त्वञ्च साध्यतावच्छेदकसम्बन्धेन बो-ध्यम् । तेन वह्निमान् धूमादित्यादौ वह्निमत्त्वावच्छिन्नप्रतियोगिता-कस्य समवायेन वह्निमतोऽन्योन्याभावस्य अधिकरणे पर्वतादौ

---

(१) साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभाववत्त्वरूपं साध्यवद-न्यत्वं विहायाऽन्योन्याभावत्वनिरुपिता या साध्यवत्त्वावच्छिन्ना प्रतियोगिता तन्निरुपकाभाववत्त्वनिवेशप्रयोजनमाह—नवेति ।

(२) स्वावच्छिन्नभिन्नेति । अत्र स्वपदेन वह्निमान्नास्तीत्यन्ता-भावो ग्राह्यः तदवच्छिन्नो वह्निमच्छून्यो देशः पर्वतादिः तद्भिन्नः पर्वतावयवादि तद्भेदः पर्वतादौ वर्त्तते, तत्रैव स्वपदग्राह्यो वह्निमान्नास्तीत्यन्ताभावोऽ-पि वर्त्तत इति समनियतत्वाद्वह्निमान्नास्तीत्यन्ताभावस्य स्वावच्छिन्नभिन्न-भेदस्वरूपत्वमिति तथा च वह्निमान्नास्तीत्यन्ताभावस्यापि साध्यवत्त्वावच्छिन्न-प्रतियोगिताकान्योन्याभावरूपतया तद्वति पर्वतादौ धूमस्य वर्त्तमानत्वादव्याप्तिः स्यादिति भावः ।

(३) प्रतियोगितायामन्योन्याभावत्वनिरूपितत्वनिवेशे यथा नोक्तदोष-स्तथा दर्शयति–तस्येति–अत्र षष्ठ्यर्थो निरूपितत्वं तथा च वह्निमान्नास्ती-त्यन्ताभावत्वनिरूपितायास्साध्यवत्त्वावच्छिन्नप्रतियोगितया इत्यर्थः

(४) अन्योन्याभावनिरूपितत्वपदार्थं निर्वक्ति-अन्योन्याभावत्वेति ।

(५) ननु समवायेन यो वह्निमान् तदन्यत्वं पर्वतादौ तत्र धूमस्य सत्त्वा-दव्याप्तिरत आह साध्यवत्त्वमिति । अत्र तेनेत्यस्य साध्यतावच्छेदक-संबन्धेन साध्यवत्त्वनिवेशेनेत्यर्थः ।

धूमादेर्वृत्तावपि नाव्याप्तिः । (१) सर्वमन्यत् प्रथमलक्षणोक्तदिशा अवसेयम् । (२) यथाचास्य न तृतीयलक्षणाभेदस्तथोक्तं तत्रैवेति समासः ।

सर्वाण्येव लक्षणानि केवलान्वय्यव्याप्त्या दूषयति—

केवलान्वयिन्यभावात् ।

पञ्चानामेव लक्षणानामिदं वाच्यं ज्ञेयत्वादित्यादि (३) व्याप्यवृत्तिकेवलान्वयिसाध्यके द्वितीयादिलक्षणचतुष्टयस्य तु कपिसंयोगाभाववान् सत्त्वादित्याद्यव्याप्यवृत्तिकेवलान्वयिसाध्यकेऽपि (४)चाभावादित्यर्थः। साध्यतावच्छेदकसम्बन्धावच्छिन्न-साध्यताव-

---

( १ ) सर्वमन्यदिति । अयमभिप्रायः, यथा प्रथमलक्षणे निरुक्तसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वतदवच्छेदकत्वान्यतरावच्छेदकसंबन्धेन साध्याभावाधिकरणत्वं विवक्षितन्तथा प्रकृतेऽपि साध्यवदन्योन्याभाववत्वं वक्तव्यम् । यथा च प्रथमलक्षणे हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयत्वीयस्वरूपसंबन्धेन तादृशवृत्तित्वाभावोऽभिमतस्तथा प्रकृतेऽपि विवक्षणीयः तेन नोक्तदोषाणामत्रावकाश इति ॥

( २ ) ननु तृतीयपंचमलक्षणयोः पुनरुक्तिरत आह--यथाचेति ।

( ३ ) व्याप्यवृत्तीति-व्याप्यवृत्तित्वं स्वाधिकरणवृत्त्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्, केवलान्वयित्वञ्च स्वप्रतियोग्यनधिकरणवृत्त्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । यस्मिन् पदार्थे निरुक्तं व्याप्यवृत्तित्वं केवलान्वयित्वञ्च वर्त्तते तद्व्याप्यवृत्तिकेवलान्वयीत्युच्यते यथा वाच्यत्वप्रमेयत्वादिकं तत्साध्यके पञ्चानामपि लक्षणानामव्याप्तिः । यत्र पदार्थे व्याप्यवृत्तित्वं न वर्त्तते किन्तु निरुक्तं केवलान्वयित्वमात्रंमस्ति तदव्याप्यवृत्ति केवलान्वयि यथा कपिसंयोगाभावादिः तत्साध्यके द्वितीयादिचतुर्णामव्याप्तिरिति भावः ।

[ ४ ] अभावादिति । अप्रसिद्धत्वादित्यर्थः, अन्यथा सिद्ध्यसिद्धिभ्यां व्याघातः स्यादिति भावः ।

च्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावस्य साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावस्य चाप्रसिद्धत्वात् । कपिसंयोगाभाववान् सत्त्वादित्यादौ निरवच्छिन्नसाध्याभावाधिकरणत्वस्याप्रसिद्धत्वाच्चेति भावः । तृतीयलक्षणस्य केवलान्वयिसाध्यकासत्त्वञ्च तद्व्याख्यानावसर एव प्रपञ्चितम् ।(१)एतच्चोपलक्षणं द्वितीये कपिसंयोग्येतद्वृक्षत्वादित्यादावप्यव्याप्तिः अधिकरणभेदेनाऽभावभेदे मानाभावेन कपिसंयोगाभाववति वृक्षे एतद्वृक्षत्वस्य वृत्तित्वात् । न च साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववदवृत्तित्वं वक्तव्यम्, एवञ्च वृक्षस्य विशिष्टाधिकरणत्वाभावान्नाव्याप्तिरिति वाच्यम् । साध्याभावपदवैयर्थ्यापत्तेः। साध्यवद्भिन्नवृत्तित्वविशिष्टवदवृत्तित्वस्यैव सम्यक्त्वात् । सद्धेतौ हेत्वधिकरणे विशिष्टाधिकरणत्वाभावादेव असम्भवात् । तृतीये साध्यवत्प्रतियोगिताकान्योन्याभावमात्रस्य घटत्वे चालनीन्यायेनान्योन्याभावमादाय नानाधिकरणकसाध्यके वह्निमान् धूमादित्यादावव्याप्तिश्चेत्यपि बोध्यम् ।

इति मथुरानाथतर्कवागीशविरचिता व्याप्तिपञ्चकस्य माथुरीटीका समाप्ता ।



(१) एतच्चोपलक्षणमिति—उभयविध केवलान्वयिन्यव्याप्त्यभिधानमुदाहरणमात्रमन्येपि वक्ष्यमाणा दोषा यथायथं लक्षणे संभवन्त्येवेति भावः

# अथ सिंहव्याघ्रचिन्तामणिः ॥



नापि साध्यासामानाधिकरण्यानधिकरणत्वम् ।

नापीति । अत्र साध्यासामानाधिकरण्यं न साध्याधिकरणवृत्तित्वाभावः, द्रव्यं सत्वादित्यादावतिव्याप्त्यापत्तेः, द्रव्यत्वाधिकरणवृत्तित्वाभावानधिकरणत्वात् सत्तायां, नापि साध्यवद्भिन्नवृत्तित्वम् (१)द्वितीयेन पौनरुक्त्यापत्तेः, किं तु साध्याधिकरणत्वाभाववद्वृत्तित्वं, तदनधिकरणत्वं च तद्भिन्नत्वम्, अधिकरणत्वप्रवेशे प्रयोजनविरहात् (२)तथा च साध्याधिकरणत्वाभाववद्वृत्तिभिन्नत्वं हेतोरव्यभिचरितत्वमिति फलितम् । अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिवारणायाधिकरणत्वप्रवेशः । (३)अव्याप्यवृत्तेरधिकरणता तु नाव्याप्यवृत्तिः । (४)साध्याधिकरणत्वं च साध्यतावच्छेदकावच्छिन्नं साध्यतावच्छेदकसम्बन्धावच्छिन्नं

(१) द्वितीयनेति । साध्यवैयधिकरण्यानधिकरणत्वमितिलक्षणे साध्यवैयधिकरण्यस्य साध्यवद्भिन्नवृत्तित्वमर्थः । तथा च द्वितीयलक्षणे न पौनरुक्त्यं स्यादिति भावः ।

(२) साध्यासामानाधिकरण्यानधिकरणत्वमिति लक्षणस्याकृतिं निष्कृष्य दर्शयति–तथा चेति ।

(३) ननु कपिसंयोगानधिकरणत्वाभाववति मूलावच्छिन्ने वृक्षे एतद्वृक्षत्वहेतोस्सत्त्वादव्याप्तितादवस्थ्यमेवेत्यत आह–अव्याप्यवृत्तेरधिकरणतेति । तथा चाव्याप्यवृत्तेः कपिसंयोगस्याधिकरणत्वं नाव्याप्यवृत्ति, नातस्तदभाववान् वृक्षः किन्तु गुणादिरेवेति नाव्याप्तिः ।

[४] साध्याधिकरणत्वमिति । साध्यतावच्छेदकावच्छिन्न-साध्यतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वमित्यर्थः ।

च ग्राह्यम् । (१)अन्यथा गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादौ सत्ताया एव साध्यत्वेन साध्याधिकरणत्वाभाववत्सामान्याद्येव, तदवृत्तित्वाज्जातेरतिव्याप्तिः स्यात्। स्याच्च समवायेन वह्न्यादौ साध्ये संयोगेन धूमादिहेतावतिव्याप्तिः। वह्न्यधिकरणत्वाभाववज्जलह्रदाद्येव तदवृत्तित्वाद्धूमादेः। (२)इत्थं च साध्यतावच्छेदकविशिष्टसत्तात्वावच्छिन्नसाध्याधिकरणत्वाभाववद्गुणादि तद्वृत्तित्वाज्जातेः, साध्यतावच्छेदकसमवायसंबन्धावच्छिन्नवह्न्यधिकरणत्वाभाववत्पर्वताद्यपि धूमस्य च तद्वृत्तित्वान्नातिव्याप्तिः। वृत्तिश्च हेतुतावच्छेदकसंबन्धेन बोध्या, तेन तादृशवह्न्यधिकरणत्वाभाववति धूमावयवे समवायेन धूमस्य वृत्तावपि न क्षतिः। नचैवं सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः सत्ताधिकरणत्वाभाववति सामान्यादौ हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तेरेवाप्रसिद्धेरिति वाच्यम् । (३)तादृशसाध्याधिकरणत्वाभावव्यापकान्योन्याभावप्रतियोगितावच्छेदकत्वमिति विवक्षितत्वात् । (४)साध्या-

---

[१]साध्यतावच्छेदकाद्यवच्छिन्नाधेयतानिरूपिताधिकरणत्वानुपादाने क्रमेण दोषमाह—अन्यथेति ।

[२] तन्निवेशेनोक्तातिव्याप्तिरित्याह—इत्थञ्चेति ।

[३] तादृशेति । सत्तावान् द्रव्यत्वादित्यादौ तत्समन्वयश्चेत्थम्-साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणत्वाभावो यः समवायेन सत्ताधिकरणत्वं नास्तीत्याकारकः तस्य व्यापकीभूतो योऽन्योन्याभावः द्रव्यं नेत्याकारकः तत्प्रतियोगितावच्छेदकत्वस्य द्रव्यत्वे सत्त्वादिति ।

[४] ननु व्यापकत्वस्य गुरुशरीरतया तदपेक्षया सामानाधिकरण्यस्य लघुत्वाद्व्यापकत्वस्थाने सामानाधिकरण्यमेवान्योन्याभावे कुतो न लक्षणे निवेश्यत इत्यत आह—साध्याधिकरणत्वेति। तथा च धूमवान् वह्नेरित्यत्रातिव्याप्तिप्रसङ्गात्र तथोक्तमिति भावः ।

धिकरणत्वाभावसामानाधिकरण्येत्युक्तौ धूमवान् वह्नेरित्यादौ धूमाधिकरणत्वाभाववति जलह्रदादौ वह्निमदन्योन्याभावसत्त्वादतिव्याप्तिरतो (१)व्यापकत्वानुधावनम् । अन्योन्याभावप्रतियोगितावच्छेदकत्वं हेतुतावच्छेदकसम्बन्धावच्छिन्नं हेतुतावच्छेदकावच्छिन्नं च ग्राह्यम् (२)अन्यथा वह्निमान् धूमादित्यादौ वह्न्यधिकरणत्वाभाववति धूमावयवे धूमवदन्योन्याभावासत्त्वादव्याप्तिः स्यात्, स्याच्च द्रव्यं जातेरित्यादौ घटत्वपटत्वादितत्तज्जातिमतोन्योन्याभावस्य द्रव्यत्वानधिकरणत्वाभावव्यापकत्वेनातिव्याप्तिः । (३) अव्याप्यवृत्तिमतोऽन्योन्याभावस्तु नाव्याप्यवृत्तिरिति पृथिवी संयोगादित्याद्यव्याप्यवृत्तिहेतुके व्यभिचारिणि नातिव्याप्तिरिति संक्षेपः ॥

---

(१) व्यापकत्वानुधावनमिति–व्यापकत्वनिवेशे धूमाधिकरणत्वाभाववान् यथा जलह्रदस्तथा तप्तायः पिण्डोऽपि तत्र वह्निमद्भेदस्यावर्त्तमानत्वाद्व्यापकत्वमिति नातिव्याप्तिः ।

[२] अन्यथेति । यद्यन्योन्याभावप्रतियोगितावच्छेदकतायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वोपादानं न स्यात्तदा वह्निमान् धूमादित्यादावव्याप्तिः, साध्याधिकरणत्वाभाववति धूमावयवे समवायेन धूमवदन्योन्याभावस्यासत्त्वेनाव्यापकत्वात्, तदुपादाने तु संयोगेन धूमवद्भेदस्य तत्र सत्त्वान्नाव्याप्तिः । एवमुक्तप्रतियोगितावच्छेदकतायां हेतुतावच्छेदकावच्छिन्नत्वोपादानाभावे द्रव्यं जातेरित्यत्रातिव्याप्तिः, द्रव्यत्वाधिकरणत्वाभाववति गुणादौ कतिपयजातिमद्भेदस्य सत्त्वेन व्यापकत्वात् तन्निवेशे तु जातिमत्सामान्यभेदस्य तत्रासत्त्वान्नातिव्याप्ति रितिभावः ·

[३] अव्याप्यवृत्तीति । अव्याप्यवृत्तिमदन्योन्याभावो यदि व्याप्यवृत्तिर्न भवेत्तदा पृथिवी कपिसंयोगादित्यत्रातिव्याप्तिः, पृथिवीत्वाधिकरणत्वाभाववति जलादौ संयोगिभेदस्याव्याप्यवृत्तित्वेन वर्त्तमानतया व्यापकत्वात् । तस्यव्याप्यवृत्तित्वे तु गुणादावेव संयोगिभेदो न तु जलादावित्यव्यापकत्वात् संयोगिभेदस्येति नातिव्याप्तिः ।

साध्यवैयधिकरण्यानधिकरणत्वं वा

साध्यवैयधिकरण्यमिति । साध्यवैयधिकरण्यं साध्यवद्भिन्नवृत्तित्वं, साध्यवदवृत्तित्वपरत्वे (१) द्रव्यं सत्त्वादित्यादावतिव्याप्तिः । अव्याप्यवृत्तिमतोऽन्योन्याभावस्तु नाव्याप्यवृत्तिरित्यव्याप्यवृत्तिसाध्यकसद्धेतौ नाव्याप्तिः । अनधिकरणत्वमित्यत्राधिकरणत्वांशस्याधिकस्य प्रवेशान्न साध्यवदन्यावृत्तित्वमित्यनेन यथाश्रुतस्य पौनरुक्त्यम्, अखण्डाभावघटकतया चाधिकरणत्वांशस्य न वैयर्थ्यम् । (२) साध्यवद्भिन्नत्वं च साध्यतावच्छेदकसम्बन्धावच्छिन्न-साध्यतावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकताकं बोध्यम् । तेन वह्निमान् धूमादित्यादौ धूमस्य समवायेन वह्निमतो भिन्ने यत्किञ्चित्साध्यवद्व्यक्तिभिन्ने च पर्वतादौ वृत्तित्वेपि न क्षतिः । (३) तादृशसाध्यवद्भिन्नत्वव्यापकान्योन्याभावप्रतियोगितावच्छेदकत्वमिति तु समुदायार्थनिष्कर्षः । (४) अ-

---

(१) द्रव्यमिति । साध्यवैयधिकरण्यपदस्य साध्यवदवृत्तित्वार्थकत्वे द्रव्यं सत्वादित्यत्रातिव्याप्तिः, सत्वे हेतौ द्रव्यत्ववद्वृत्तित्वाभावानधिकरणत्वादिति भाव

[२] साध्यवद्भिन्नत्वं चेति । अत्र साध्यवद्भिन्नत्वपदेन साध्यवत्प्रतियोगिकभेदो बोध्यः ।

(३) तादृशेति । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नावच्छेदकताकप्रतियोगिताको भेदः संयोगेन वह्निमान्नेत्याकारकस्तद्व्यापकीभूतोऽन्योन्याभावो धूमवान्नेत्याकारकः तत्प्रतियोगितावच्छेदकत्वस्य धूमे सत्वाल्लक्षणसमन्वयः ।

(४) अन्यथा पूर्ववदिति । यदि व्यापकत्वघटितं लक्षणं न स्यात्किन्तु यथा श्रुतं साध्यवद्भिन्नवृत्तित्वानधिकरणत्वमेव स्यात्तदा सत्तावान् द्रव्यत्वादित्यत्राव्याप्तिः हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्भिन्नवृत्तित्वाप्रसिद्धेरिति भावः ।

न्यथा पूर्ववत्साध्यवद्भिन्नवृत्तित्वमित्यत्र वृत्तेर्हेतुतावच्छेदकसम्बन्धेनैव वाच्यतया सत्तावान् द्रव्यत्वादित्यादावव्याप्त्यापत्तेः। शेषं पूर्ववत्।

लक्षणद्वयमेकदैव दूषयति—

**तदुभयमपि साध्यानधिकरणानधिकरणत्वम्। तच्च तत्र यत्किंचित्साध्यानधिकरणाधिकरणे धूमे चाप्रसिद्धम्**

तदुभयमपीति। (१) साध्यानधिकरणानधिकरणत्वं-साध्यानधिकरणानधिकरणत्वनियतं, साध्यानधिकरणावृत्तित्वव्याप्यमिति यावत्। तच्च। व्यापकीभूतं साध्यानधिकरणावृत्तित्वं च। तत्र। केवलान्वयिसाध्यकेऽप्रसिद्धमित्यन्वयः। साध्यानधिकरणत्वस्य साध्याधिकरणत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वस्य तत्राप्रसिद्धेः।

यत्किञ्चिदिति। (२)यदि च साध्यानधिकरणत्वं न तत्सामान्यभेदः किं तु साध्याधिकरणप्रतियोगिताकभेदवत्त्वमात्रं तदा

[ १ ] साध्यानधिकरणेति। अत्रायमाशयः, साध्यासामानाधिकरण्ये त्यादिलक्षणद्वयं व्याप्यम्, अनयो र्व्यापकन्तु साध्यानधिकरणानधिकरणत्वं पर्यवसितम्। केवलान्वयिसाध्यकस्थले साध्यसामान्यानधिकरण्याप्रसिद्ध्या पूर्वोक्तव्यापकाप्रसिद्धिः व्यापकाप्रसिद्धौ सुतरां व्याप्यस्य लक्षणद्वयस्याप्रसिद्धिरिति।

[ २ ] यदि चेति। यदि साध्यानधिकरणत्वशब्देन यत्किञ्चित्साध्याधिकरणान्यत्वं विवक्षितं तदा वन्हिमान् धूमादित्यत्र वाच्यं ज्ञेयत्वादित्यत्रचाव्याप्तिः, यत्किंचित्साध्याधिकरणान्ये पर्वतादौ हेतोर्वर्त्तमानत्वादिति भावः।

वह्निमान् धूमादित्यत्र यत्किञ्चिद्वह्न्यनधिकरणे पर्वतादौ वर्तमाने धूमेप्यप्रसिद्धमित्यर्थः। अप्यर्थकचकारात्केवलान्वयिसाध्यकसमुच्चयः। तथा च व्यापकाभावाद्व्याप्यीभूतं तदुभयलक्षणमपि तदुभयत्राप्रसिद्धमिति भावः। (१) साध्यानधिकरणानधिकणत्वमिति यथाश्रुतं तु न सङ्गच्छते; यथोक्तलक्षणद्वयस्य तत्स्वरूपत्वाभावादिति ध्येयम्।

भट्टाचार्यानुयायिनस्तु, तदुभयमपि—तदुभयलक्षणवाक्यमपि। साध्यानधिकरणानधिकरणत्वम्—साध्यानधिकरणानधिकरणत्वबोधजनकम्। साध्याधिकरणत्वसामान्याभाववद्वृत्तित्वाभाव-साध्यवत्सामान्यभिन्नवृत्तित्वाभावान्यतरबोधजनकमिति यावत्। तच्च तादृशान्यतराभाववत्त्वं च। तच्च। केवलान्वयिसाध्यकेऽप्रसिद्धमित्यन्वयः। साध्याधिकरणत्वसामान्याभावादेरप्रसिद्धत्वादिति भावः। ननु तदुभयवाक्यं न प्रागुक्ताभावान्यतरविषयबोधजनकम्, अपि तु साध्याधिकरणत्वप्रतियोगिकाभाववद्वृत्तित्वसामान्याभाव-साध्यवत्प्रतियोगिकभेदवद्वृत्तित्वसामान्याभावान्यतरबोधजनकमेव। साध्याधिरणत्वप्रतियोगिकाभाव-साध्यवत्प्रतियोगिकभेदौ च केवलान्वयिन्यपि प्रसिद्धावित्यत आह-यत्किञ्चिदिति। शेषं पूर्ववदित्याहुः॥

इति सिंहव्याघ्रलक्षणयोर्माथुरी टीका समाप्ता।



[१] साध्यानधिकरणानधिकरणत्वस्य यथाश्रुतार्थपरित्यागे बीजमाह साध्यानधिकरणेति।

# व्याप्तिपञ्चकदीधितिः-



समारब्धानुमानप्रामाण्यपरीक्षाकारणीभूतव्याप्तिग्रहोपायप्रतिपादननिदानं व्याप्तिस्वरूपनिरूपणमारभते, नन्वित्यादिना ।

## जागदीशी विवृतिः ।

( ननु " व्याप्तिग्रहोपायश्च वक्ष्यते " इत्युक्तं प्राक् निरूप्यते च व्याप्तिरित्यर्थान्तरम् (१) अत आह ) "समारब्धेति" (२) समारब्धा या अनुमानप्रामाण्यपरीक्षा ( परमतनिराकरणपूर्वकं स्वमतेनानुमानप्रामाण्यव्यवस्थापनं ) तत्कारणीभूतं(*)यद्व्याप्तिग्रहोपायप्रतिपादनं तन्निदानं व्याप्तिस्वरूपनिरूपणमित्यर्थः।(व्याप्तिज्ञानं विना " अयं व्याप्तिग्रहोपायः " इति ज्ञातुमशक्यत्वात् व्याप्तेस्तत्र

---

(१) अत इत्यादि । " नन्वनुमिति हेतु व्याप्तिज्ञाने " इति ग्रन्थात्प्रागनुमिति ग्रन्थे मूलकारो " व्याप्तिग्रहोपायश्च वक्ष्यते " इति ग्रन्थेन व्याप्ति ज्ञानो पायनिरूपणं स्वकर्त्तव्यत्वेन प्रतिज्ञाय व्याप्ति स्वरूपविवेकमारभमाणोऽर्थान्तरं गत इत्याशंका प्रेक्षावतां समुद्भवति तामुत्सारयितुं शिरोमणि श्चिन्तामणि सन्दर्भावतरण रूपेणाहेत्यर्थः । अर्थान्तरं पराजयस्थानरूपो दोषः तल्लक्षणन्तु प्रकृताऽसम्बद्धार्थाभिधानत्वम् । अत्र—( ) एतादृशचिन्हयुतः पाठः प्राचीन पुस्तकेषुनोपलभ्यते—इति बोध्यम् ।

(२) समारब्धेति । अतीतकालिकसमीचीनाद्यकृति विषयीभूता परीक्षेत्यर्थः

(*) ' कारणीभूतो यो व्याप्तिग्रहस्तदुपाय प्रतिपादनमित्यर्थः इति कलिकाता पु० पाठः



साध्याभाववदवृत्तित्वस्याव्याप्यवृत्तिसाध्यकसद्धे- तावव्याप्तिमाशंक्याह, साध्यवद्भिन्नेति ।

विशेषणत्वात् इति भावः ) ( १ ) तथाच प्रामाण्य व्यवस्थापनोपो- द्धात संगत्या तन्निरूपणमिति हृदयम् । अव्याप्यवृत्तीति कपि- संयोग्येतद्वृक्षत्वात् इत्यादावित्यर्थः । ( २ ) इदञ्च येन रूपेण येन सम्बन्धेन च साध्यत्वं तदवच्छिन्नस्य साध्याभावस्य प्रवेश- माद्दत्य, ( ३ ) अन्यथा तु व्याप्यवृत्तिसाध्यकेऽपि विशिष्टा- भावादिकमादाय दोषो बोध्यः । ( ४ ) अव्याप्यवृत्तिसाध्यकेऽपि

---

( १ ) पूर्वग्रन्थेन साकमस्य ग्रन्थस्याभिमत–संगतिं दर्शयति तथाचेति अनुमानप्रामाण्यव्यवस्थापनोपपत्त्यै व्याप्तिनिरूपण मित्यर्थः ।

अत्र प्रामाण्येत्यादिस्थाने ' व्याप्तिग्रहोपायाभिधानोपयुक्तत्वेन , इति पाठः कलिकाता मुद्रित पुस्तके दृश्यते ।

( २ ) इदञ्चेति । अस्यार्थस्तु–यद्रूपावच्छिन्ना यत्सम्बन्धावच्छिन्ना साध्यता भवति तद्रूपावच्छिन्न तत्सम्बन्धावच्छिन्नप्रतियोगिताक साध्याभावस्य प्रथमलक्षणेप्रवेशमादृत्य कपिसंयोग्येतद्वृक्षत्वादित्यत्राव्याप्तिरुक्तेति । सप्रपञ्च- मिदं ६ पृष्ठे टिप्पण्या समभिहितम् ।

( ३ ) पूर्वोक्तरूपेण साध्याभावस्याऽ प्रवेशे प्रसिद्धस्थलं परित्यज्याऽप्रसिद्ध स्थलानुसरणाऽऽनर्थक्यमाह अन्यथेति विशिष्टाभावादीति महानसीयत्व- पर्वतीयत्वविशिष्टवन्ह्याद्यभावं, वन्हिघटोभयाद्यभावं समवायेनवह्यभावञ्चादाय तद्वति पर्वतादौधूमादेर्वृत्तित्वेन वन्हिमान् धूमादित्यादि व्याप्यवृत्तिसाध्य- कस्थलेऽप्यव्याप्ति स्सम्भवत्येवेति भावः ।

( ४ ) लक्ष्ये लक्षणा सत्त्वमित्यव्याप्तिलक्षणादेवाव्याप्तेः सद्धेतुवृत्तित्वेऽ- वधारिते सद्धेतावव्याप्तिरित्यत्र ' सद्धेतौ ' इति निर्देशो व्यर्थ इत्याशंक्याह अव्याप्यवृत्तीति

साध्यवद्भिन्ने यः साध्याभावस्तद्वद्वृत्तित्वमर्थः ।

(१)आकाशादिहेतावव्याप्त्यभावादाह सद्धेताविति वृत्तिमद्धेताविति तदर्थः । (२) अव्याप्यवृत्तिसाध्यं यत्र तत्र सन् वर्त्तमानो यो हेतुस्तत्रेत्यर्थः, तेन संयोगाभाववान् गुणत्वादित्यादावव्याप्त्यभावेऽपि न क्षतिरित्यपि वदन्ति । (३) ननु साध्यवद्भिन्नो यः साध्याभाववान् इत्यर्थे साध्याभाववत्पदवैयर्थ्यं साध्यवद्भिन्नावृत्तित्वस्यैव सम्यक्त्वात् (४) न चावृत्तित्वेन समं साध्यवद्भिन्नस्यान्वयाविवक्षणात् साध्याभाववता सममेव तादात्म्येनैवान्वयविवक्षणान्न वैयर्थ्यमिति वाच्यम्, तथासतिसाध्यवद्भिन्नात्मको यो[५]मतुबर्थःसम्बन्धी तदवृत्तित्वस्यैव सम्यक्त्वे साध्याभावपदवैयर्थ्यध्रौ-

---

(१) आकाशादीति संयोगादिसम्बन्धेन गगनादिहेतुके वन्हिमान् गगनादित्यादौ गगनस्यावृत्तित्वभावत्वेन लक्षणसमन्वयान्नाव्याप्तिरिति भावः।

(२) 'अव्याप्यवृत्ति साध्यक सद्धेतावव्याप्ति' रिति शिरोमणि वचन मसङ्गतम् संयोगाभाववान् गुणत्वादित्यादावव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्त्य भावादत आह अव्याप्यवृत्तिसाध्यमिति । यस्मिन्नधिकरणे साध्यमव्याप्य वृत्ति भवति तत्राधिकरणे वर्त्तमान हेतावेवाव्याप्तिः, संयोगाभावसाध्यकगुणत्वन्तु न तथेतिभावः ।

(३) साध्यवद्भिन्नसाध्याभाववदवृत्तित्वमिति लक्षणे साध्यवद्भिन्न साध्याभाववत्पदयोः कर्मधारयसमास एव कर्त्तव्यो लक्षणारूपदोषाभावात् न तु साध्यवद्भिन्ने साध्याभाव इतिषष्ठीतत्पुरुषो लक्षणारूपगौरवादित्याशंकते नन्विति

(४) येन पदेन विना विवक्षितान्वयबोधोऽनुपपन्नो न तत्पदं वैयर्थ्यास्पद मिति भावः ।

(५) मतुबर्थइति साध्यवद्भिन्नस्य साध्याभावसम्बन्धिनाऽभेदान्वयो विवक्षितः स च मतुवर्थसम्बन्धिनाऽभेदान्वयेनाप्युपपन्न इति साध्याभावपद

व्यात्, अतः सप्तमीसमासं समर्थ्य व्याचष्टे साध्यवद्भिन्नेति। [१] तथाच साध्यवद्भिन्नस्य वृत्तावनन्वयात् यथासन्निवेशे न वैयर्थ्यम्। (२) साध्याभावे साध्यवद्भिन्नवृत्तित्वविशेषणं त्वव्याप्यवृत्तिसाध्यकसङ्ग्रहार्थमेवेत्याशयः। (३) साध्यवद्भिन्नवृत्तिद्रव्यत्वादिमति पर्वतादौ धूमादेः सत्त्वादव्याप्तिर (४) सम्भवो वा स्यादतः साध्याभावेति। न च कपिसंयोग्येतद्वृक्षत्वादित्यादेः संग्रहार्थमधिकरणभेदेनाभावभेदमादृत्यैव (५) लक्षणमिदं कार्य्यं, तथाच साध्यवद्भिन्ने योऽभावस्तद्वदवृत्तित्वस्यैव सम्यक्त्वे साध्यपदवैयर्थ्यमिति वाच्यम्, (६) प्रतियोगितासंस-

---

वैयर्थ्यमेव, साध्यवद्भिन्नसम्बन्ध्यवृत्तित्वस्यैव सम्यक्त्वादितिभावः।

(१) सप्तमीतत्पुरुषसमासे स्वीकृते साध्याभाववदिति विशेष्यस्य न वैयर्थ्यमित्याह तथाचेति

(२) साध्यवद्भिन्नवृत्तित्वविशेषणस्य फलमाह—साध्याभाव इति।

(३) सप्तमीतत्पुरुषसमासे साध्याभावपदस्य कृत्यमाह साध्यवदिति।

(४) असम्भवो वेति। पर्वतो वन्हिमान् गगनादित्यस्य लक्ष्यत्वेऽवृत्ति गगनादौ साध्यवद्भिन्नवृत्ति द्रव्यत्वादिमत्पर्वताद्यवृत्तित्वाल्लक्षणसमन्वयसम्भवेनाऽव्याप्तिरुक्ता यदि गगनादीनामवृत्तिस्वभावानां न लक्ष्यत्वन्तदा लक्ष्यमात्रे लक्षणासत्त्वादसम्भव इति भावः॥

(५) लक्षणमिदमिति यद्यधिकरणभेदेनाभावभेदाभ्युपगमोत्र लक्षणे न स्यात्तदा साध्यवद्भिन्नवृत्तित्वनिवेशेऽपि कपिसंयोग्येतद्वृक्षत्वादित्यत्राव्याप्तितादवस्थ्यम्, साध्यवद्भिन्ने गुणादौ वर्त्तमानस्य कपिसंयोगाभावस्य मूलावच्छेदेन वृक्षादावपि सत्त्वात्तत्र चैतद्वृक्षत्वस्य वर्त्तमानत्वादिति भावः।

(६) प्रतियोगितेति प्रतियोगिता निरूपितानुयोगित्वसम्बन्धेन साध्यविशिष्टाभावघटितमिदं लक्षणं, शुद्धाभावघटित साध्यवद्भिन्नवृत्त्यभाववदवृत्तित्वन्तु लक्षणान्तरं तथा च लक्षणान्तरेण लक्षणान्तरस्य वैयर्थ्यं न सम्भवतीति भावः। वैयर्थ्यलक्षणन्तु द्वितीयलक्षण माथुरी टिप्पण्यामभिहितमस्माभिः।

र्गेण साध्यीयत्वेनैव साध्याभावस्य प्रवेशः, न त्वभावत्वेनापीति तद्वैयर्थ्यशंकानवकाशात्,।

[१] वस्तुतः स्वप्रतियोगितावच्छेदकसम्बन्धेन साध्यवद्भिन्ने वर्त्तते यः साध्यतावच्छेदकसम्बन्धेन साध्यीयोऽभावः तद्वदवृत्तित्वमर्थः। तथा च साध्यतावच्छेदकसम्बन्धेन साध्यीयत्वार्थकस्य साध्यपदस्याऽनुक्तौ स्वप्रतियोगितावच्छेदकीभूतसमवायादिसम्बन्धेन वन्ह्यादिमतोऽन्यस्मिन् पर्वतादौ यः समवायाद्यवच्छिन्नवन्ह्यभावस्तद्वति धूमादेः सत्त्वादव्याप्तिः स्यादत स्तदुपात्तमिति नव्याः।

केचित्तु व्याप्यवृत्तित्वाव्याप्यवृत्तित्वविरुद्धधर्माध्यासात् संयोगाद्यभावस्यैव द्रव्यगुणाद्यधिकरणभेदेन भेदः, न तु गगनाद्यभावस्य (२) मानाभावात्, तथा च साध्यवद्भिन्नवृत्तिगगनाद्यभाववति पर्वतादौ धूमादेःसत्त्वादव्याप्तिरतः साध्यपदमित्याहुः। तत् मन्दम्-(३) गुणे गगनाद्यभावे गुणत्वादिसामानाधिकरण्यं, नतु द्रव्ये गगनाद्यभावे तथात्वमित्यादि प्रतीत्या गगनाद्यभावस्यापि गुणत्वादिसामानाधिकरण्यतदभावयोः विरुद्धयोः धर्मयोः सम्भवादिति दिक्। न च (४) घटत्वघटाकाशसंयोगान्यतरत्वाद्यवच्छिन्नाभाव-

(१) माऽस्तुसाध्यपदवैयर्थ्यं निष्प्रयोजनत्वन्तु साध्यपदस्य दुर्वारमेवेत्याशंक्याह वस्तुतस्त्विति अत्र स्वपदेन लक्षणघटकः साध्याभावो ग्राह्यः,

(२) मानाभावादिति विरुद्ध धर्मप्रतीत्यभावादित्यभिमानः।

(३) गगनाभावेऽपि विरोधिधर्माध्यास सम्भवेन गगनाभावोऽप्यधिकरण भेदभिन्न एवे त्याशयेनाह तन्मन्दमिति

(४) घटत्वाकाशेति, अत्र घटत्वाभाव मात्रस्य साध्यत्वेऽव्याप्तिरेवनसंभवतीत्यतो घटाकाशसंयोगस्योपादानम्। यद्यपि घटाकाशसंयोगाभावमात्रस्य साध्यत्वेऽव्याप्तिः सम्भवति तथापि तस्य केवलान्वयित्वेनाऽव्याप्तेरिष्टतया

कर्मादौ संयोगाद्यभावस्य भिन्नत्वेमाना भावादाह-
साध्यवदिति । हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेना
व्याप्तेराह सकलेति ।

वान् गगनत्वादित्यत्राव्याप्तिः, साध्यवद्भिन्ने घटे वर्त्तमानस्य गग-
नघटसंयोगात्मकसाध्याभावस्याप्यधिकरणे गगनादौ गगनत्वादि-
हेतोः सत्वादिति वाच्यम्, (१)अभावाभावस्यातिरिक्ततामते एवै-
तल्लक्षणकरणादिति भावः ।

भिन्नत्वे इति । द्रव्यनिष्ठसंयोगाभावतो(२)भिन्नत्व
इत्यर्थः । मानाभावादिति । तथाचात्रा व्याप्यवृत्तिसाध्यकसद्धे
ताव व्याप्तिरितिभावः ।

हेतोरिति न च साध्यवत्प्रतियोगिकान्योन्याभावस्य केवला
न्वयित्वादसम्भव एव वक्तुमुचितो नाव्याप्तिरिति वाच्यम्, वह्निमान्
गगनादित्यत्रावृत्तिगगनादौ लक्षणसम्भवेन तस्यापि सद्धेतुतायाः

---

घटत्वोपादानम् । घटत्वघटाकाशसंयोगोभयाभावस्यापिकेवलान्वयितयातत्साध्य-
त्वेऽप्यव्याप्तेरिष्टत्वेनान्यतरोपादानम्,अन्यतरत्वञ्च भेदद्वयावच्छिन्नप्रतियोगिता
कभेदवत्त्वम् ।

(१) अभावाभावस्येति । तथाचान्यतराभावाभावोनाऽन्यतरस्वरूपः
किन्त्वतिरिक्तोऽभावस्वरूप स्तस्याधिकरणं घटएव तत्र च गगनत्वस्याऽवर्त्तमान-
त्वाल्लक्षणसमन्वय इतितात्पर्यम् ।

(२, भिन्नत्वइति । ' कर्मादौ संयोगाद्यभावस्यभिन्नत्वेमानाभावात् ,
इति दीधितौ प्रथमोपस्थितं गुणं विहायकर्मार्थस्तानुसरणं यद्यपि निष्प्रयोजनन्त-
थापि कर्मणआदि कर्मादिरितिषष्ठीसमासेन कर्मादिपदस्य गुणपरत्वमेव ।

स्वयं [ १ ] वक्ष्यमाणत्वादिति भावः । साध्यपदस्य [२] सिद्धिकर्मतत्तद्व्यक्तिपरतया तत्तद्व्यक्त्यवच्छिन्नान्योन्याभावासामानाधिकरण्यरूपस्य पर्यवसितार्थस्य द्रव्यं पृथिवीत्वादित्यादावेव सम्भवाद्गन्धवती पृथिवीत्वादित्यादावव्याप्तिकथनमित्यपि वदन्ति ।

[ ३ ] ननु सकलस्य साध्यप्रतियोगिकाभावस्याधिकरणाऽप्रसिद्ध्या व्यभिचारिण्यतिव्याप्तिवारणाय यदि साध्याभावस्य विशेषणं साकल्यं तदा वन्हिमान् धूमादित्यादिसद्धेतावव्याप्तिः । तत्रापि [४] तत्तत्सपक्षावृत्तित्वावच्छिन्नाभावरूपस्य तत्तद्विपक्षावृत्तित्वा-

---

( १ ) वक्ष्यमाणत्वादिति । सिद्धान्तलक्षणे वक्ष्यमाणत्वादित्यर्थः ।

( २ ) सिद्धिकर्मतत्तद्व्यक्तीति । अनुमितिविषयीभूततत्तद्व्यक्तीत्यर्थः । तत्तद्व्यक्त्यवच्छिन्नेति । तत्तद्व्यक्तिमात्रावच्छिन्नप्रतियोगिताकान्योन्याभावाधिकरणनिरूपितवृत्तित्वाभाव इत्यर्थः । तथा चोभयाभावस्य सिद्धिकर्मतत्तद्व्यक्तिमात्रावच्छिन्नप्रतियोगिताकाभावरूपत्वाभावान्न तमादायाऽसम्भवः किन्तु नानाव्यक्तिगन्धादिसाध्यकसद्धेतावव्याप्तिरेवेति भावः ।

( ३ ) धूमवान् वन्हेरित्यत्र ह्रदादिस्वरूपं यत्किञ्चित्साध्याभावाधिकरणमादायापतितामतिव्याप्तिं वारयितुं साकल्यं साध्याभावाधिकरणविशेषणमिष्यते—परन्तु तदतिव्याप्तिवारणं साध्याभावे साकल्यविशेषणादपि भवितुमर्हतीति व्यर्थमधिकरणे साकल्यविशेषणमित्याशङ्कामपाकुर्वन्नवतारयति—नन्विति ।

( ४ ) तत्तत्सपक्षेति । सपक्षो निश्चितसाध्यवान् महानसादिः, एवञ्च महानसावृत्ति नास्ति चत्वरावृत्ति नास्ति पर्वतावृत्ति नास्तीत्यादयभावोऽपि सकलसाध्याभावान्तर्गतः तेषामपि महानसाद्यवृत्तित्वेन वन्हिप्रतियोगिकत्वात् [ चालनीन्यायेन ] प्रत्येकं वन्हेः सपक्षावृत्तित्वात् एवं विपक्षो ह्रदादि-

साकल्यं साध्याभाववति साध्ये च बोध्यम् ।
वच्छिन्नाभावरूपस्य च साध्यप्रतियोगिकाभाव [ १ ] स्तोमस्या
धिकरणाऽप्रसिद्धेरत आह—साध्याऽभाववतीति । तथा
साकल्यं न साध्याभावविशेषणम् अतो नाऽप्रसिद्धिरिति भावः
[ केचित्तु—ननु धूमवान् वन्हेरित्यादिव्यभिचारिण्यतिव्याप्तिः
साध्याभाववद्व्यतिरिक्तत्वन्निष्ठाऽभावाप्रतियोगित्वादित्यत आह-
साकल्यं साध्याभाववतीति ।]नन्वेवमपि(२)साध्याऽभाववत्
खिलान्तर्गते महानसादौ वर्तमानस्याऽभावस्य प्रतियोगित्वं धूमादे
नास्तीत्यव्याप्तितादवस्थ्यमत उक्तं साध्ये चेति । तथा
सपक्षो महानसादि र्न सकलसाध्याभाववानित्यदोषः(३)प्राञ्चस्तु-
व्यभिचारिण्यतिव्याप्तिवारणार्थं साध्याभाववति यावत्वविशेषं

---

स्तद्वृत्ति नास्तीत्यभावोऽपि ह्रदाद्यवृत्तित्वेन वन्हिप्रतियोगिकः वन्हेस्तत्र त
विपक्षेऽवर्त्तमानत्वात् तथाच सकलसाध्याभावपदेन ह्रदावृत्तिर्नास्ति घटावृत्ति
र्नास्ति महानसावृत्ति र्नास्तीत्याद्यभावानामुपग्रहः ।

( १ ) स्तोमस्येति । समुदायस्येत्यर्थः । अधिकरणाप्रसिद्धेरिति
अयमाशयः घटावृत्ति र्नास्तीत्यभावो लाघवाद्घटत्वरुपः महानसावृत्ति र्नास्तीत्य
भावो महानसत्वादिरुपः तथाच घटत्व–ह्रदत्व–महानसत्व–पर्वतत्वादिरूपाणां
साध्यप्रतियोगिकाभावानामेकाधिकाधिकरणमप्रसिद्धमिति वन्हिमान् धूमा
दित्यादावव्याप्तिरिति ।

( २ ) साध्याभाववदिति । साध्यप्रतियोगिको यः पर्वतीयादिवन्ह्य
भावस्तद्वति महानसादावित्यर्थः ।

( ३ ) प्राञ्चस्त्विति । यद्यपि प्रथमोपस्थिते साध्ये साकल्यविशेषण
मुक्त्वैव साध्याभाववति साकल्य–विशेषणं वक्तुमुचितन्तथापि धूमवान् वन्हे

दस्त एव साध्ये यावत्त्वविशेषणमव्याप्तिवारकतया सार्थकं भवति. अतः साध्याभाववत्येव साकल्यं प्राक् प्रयोजयति—साकल्यमित्यादिना—इत्येवमवधारयन्ति ।

(१) तन्मन्दम् । साध्याभाववति साकल्यानुक्तावतिव्याप्तिवारकतयैव साध्ये साकल्यविशेषणस्य प्रथमतः सार्थकत्वसम्भवात् अन्यथा गगनावृत्तिधर्मवान् द्रव्यत्वादित्यादौ पटत्वादिलक्षणतत्तत्साध्यव्यक्त्यभाववद्गुणादिनिष्ठाभावप्रतियोगिनि द्रव्यत्वाद्यवति प्रसङ्गादिति ध्येयम् । (इत्थञ्च प्रथमतः साध्ये साकल्यविशेषणोपादाने गुणत्वादेरपि सङ्ग्रहात् तदभाववान्न गुणादिः किन्तु गगनमात्रं तत्र हेतो वृत्तित्वान्नातिव्याप्तिः ।)

---

रित्यादावतिव्याप्तिनिरासाय प्रथमतः साध्याभाववत्येव साकल्यविशेषणोपादानेन समायातां वन्हिमान् धूमादित्यादावव्याप्तिं निराचिकीर्षुः पश्चात्साध्येऽपि साकल्यविशेषणमवोचत दीधितिकार इति प्राचामवधारणमित्यर्थः ।

[१] तन्मन्दमिति । प्रथमतः साध्येऽपि साकल्यविशेषणस्यातिव्याप्तिवारणफलकत्वात्प्राचामवधारणमयुक्तमिति भावः । वस्तुतस्तु 'साकल्यं साध्याभाववति साध्ये च बोध्यम्' इति वाक्ये प्रथमोपस्थितस्यापि साध्यस्यानन्तरमुपादानाभिप्रायस्तु—साध्ये साकल्यं देयं साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बोध्य इति विकल्पस्फोरणमेव । यदि साध्याभावस्य पश्चादुपादानं स्यात्तर्हि साध्यसामान्याभावेन साकं साध्याभाववति साकल्यविशेषणस्य विकल्पः प्रतीयेत स चानपेक्षित इति भावः ।

**साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यस्तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः ।**

ननु साध्यवत्यपि (१) द्वित्वाद्यवच्छिन्नप्रतियोगिताकस्य सकलसाध्यप्रतियोगिकाऽभावस्य सत्त्वादसम्भवः । [२] किञ्च [३] सकलपदोत्तरसाध्यनाम्ना सकलसाध्यप्रतियोगिताकाऽभाववतोऽनुपस्थापना [४] तेन समं सकलपदस्य कर्मधारयोऽप्यनुपपन्न इत्यत आह—साध्याऽभाव इति । तथा च साध्याभाववत्येव साकल्यं देयं नतु साध्येऽपीति भावः । साध्याभाववति साकल्यदानस्य प्रयोजनमाह—तेनेति । विपक्षैकदेशः कश्चिद्विपक्षः । साध्यनिष्ठसाकल्यस्य साध्यसामान्याभावस्य वा निवेशस्य फल-

---

[१] द्वित्वावच्छिन्नेति । वह्निघटोभयं नास्तीत्याकारक—सकलसाध्यप्रतियोगिकाभाववति पर्वतादौ धूमाभावासत्त्वादसंभव इति भावः।

(२) ननु व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकसकलसाध्याभावविवक्षाया नोक्तासंभवः संभवतीत्यत आह—किञ्चेति ।

(३) सकलपदोत्तरनाम्नेति । सकलपदोत्तरवर्त्तिना साध्यनाम्ना (प्रातिपदिकेन) इत्यर्थः

(४) तेन सममिति । यत्पदार्थस्य येन पदार्थेन साकमन्वयोऽपेक्षितस्तद्बोधकपदयोरेव मिथस्समासो भवति, तथाच प्रकृते साकल्यस्य साध्याभाववताऽन्वयो विवक्षितः सच साध्याभाववान् न साध्यपदोपस्थाप्यः किन्तु साध्याभाववत्पदोपस्थाप्यः तस्मात्साध्यपदेन साकं सकलपदस्य कर्मधारयोऽपि न संभवतीति भावः । अन्येत्वेवमाहुः—"एकत्र विशेषणतयाऽन्वितस्येतरत्र विशेषणतयाऽन्वयो न भवतीति" नियमात्साध्याभाववद्विशेषणस्य साकल्यस्य साध्यविशेषणत्वासम्भवतात्पर्यकोऽयं ग्रन्थ इति ।

नवा नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः । अव्याप्यवृत्तिसाध्यक—व्याप्यवृत्तिसद्धेतावव्याप्ते र्व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्ते वरियाय-

माह-–नवेति । एकव्यक्तिसाध्यके सकलसाध्योक्तावप्यव्याप्तिरग्रे स्थास्यतीत्याशयेन नानेत्युक्तम् (नचैकव्यक्तिसाध्यकस्थलेऽपि द्वित्वाद्यवच्छिन्नाभावमादायाऽसम्भव एव सम्भवति, नत्वव्याप्तिरिति वाच्यम् । व्यासज्यवृत्तिधर्मानवच्छिन्नत्वविशेषणेनैव तद्वारणसम्भवात्) अव्याप्यवृत्तीति । [१] कपिसंयोगी एतत्त्वादित्यादावित्यर्थः । [२] यद्यप्यग्रे हेत्वाभावस्यापि प्रतियोगिवैयधिकरण्यावच्छिन्नस्यैव निवेशः करणीय इति अव्याप्यवृत्ति हेतावव्याप्तिः सम्भवति, [३] तथापि यथाश्रुतमूलस्य न तत्राव्याप्तिरित्यावेदयितुं व्याप्यवृत्तिहेतूक्तिः । व्यभिचारिणीति ।

---

[१] कपिसंयोगीति । अयमभिप्रायः । यदि साध्याभावे प्रतियोगिवैयधिकरण्यविशेषणोपादानं न स्यात्तदा कपिसंयोगसामान्याभाववति सकलान्तर्गते मूलाच्छिन्ने वृक्षे हेत्वभावासत्त्वादव्याप्तिरिति भावः ।

[२] यद्यप्यग्र इति । साध्याभावे प्रतियोगिवैयधिकरण्यविशेषणानुपादानेऽव्याप्यवृत्ति साध्यकव्याप्यवृत्तिसद्धेतावव्याप्तिर्दीधितिकारेण दत्ता तत्र सद्धेतौ व्याप्यवृत्ति त्वविशेषणात्प्रतीयते यदव्याप्यवृत्तिसद्धेतौ नाव्याप्तिसम्भवः स चासंगतः, कपिसंयोगी कपिविभागादित्यत्राव्याप्यवृत्तिसद्धेतावप्यव्याप्तिः सम्भवत्येव, कपिसंयोगाभाववति वृक्षे वक्ष्यमाणप्रतियोगिवैयधिकरण्यावच्छिन्नकपिविभागाभावस्यासत्त्वादिति ।

[३] यावदनागतावेक्षणन्यायेनाग्रिमं हेत्वभावे प्रतियोगिवैयधिकरण्यविशेषणं नालोच्यते तावद्यथाश्रुतलक्षणस्याव्याप्यवृत्तिसद्धेतौ नाव्याप्तिस्संभवति

अभावद्वये प्रतियोगिव्यधिकरणत्वं बोध्यम् ।

(१) एतद्वृक्षत्ववान् कपिसंयोगात् इत्यादावित्यर्थः। अभावद्वये इति । साध्याभावे हेत्वभावे चेत्यर्थः। अत्र च साध्याभावे प्रतियोगिवैयधिकरण्यं [ २ ] साध्यताघटकसम्बन्धेन प्रतियोगिनो यदनधिकरणं तद्वृत्तित्वं, [ ३ ] तेन धूमाद्यभाववतोऽपि अयः पिण्डादेः कालिकसम्बन्धेन धूमादिमत्त्वेऽपि नातिव्याप्तिः। हेत्वभावे प्रतियोगिवैयधिकरण्यं तु प्रतियोगितावच्छेदकसम्बन्धेन [ ४ ] प्रतियोग्यनधिकरणत्वघटितं बोध्यम् । [ ५ ] तेन अयमात्मा ज्ञानादित्यादौ साध्याभा-

---

कपिसंयोगरूपसाध्याभाववति वृक्षे कपिविभागाभावस्य सत्त्वादित्याशयेनाह- तथापीति ।

[१] एतद्वृक्षत्ववानिति । यदि हेत्वभावे प्रतियोगिवैयधिकरण्यं न विशेष्यते तदा एतद्वृक्षत्ववान् कपिसंयोगादित्यत्र व्यभिचारिण्यतिव्याप्तिः एतद्वृक्षत्वाभाववति भूतलादौ कपिसंयोगाभावसत्त्वादिति ।

[२]साध्यताघटकेति । साध्यतावच्छेदकसम्बन्धेन प्रतियोगिनो यदधिकरणं तद्भिन्नवृत्तिर्यः साध्याभाव इत्यर्थः । [कलिकातामुद्रितपुस्तके प्रतियोगिनो यदधिकरणं तदवृत्तित्वम्] इति पाठो दृश्यते स तु संयोगी सत्त्वादित्यादावतिव्याप्त्याधायकत्वादुपेक्षणीयः ।

[ ३ ] साध्यताघटकसम्बन्धेन प्रतियोगिवैयधिकरण्यविवक्षायाः फलमाह- तेनेति ।

[ ४ ] प्रतियोग्यनधिकरणत्वघटितमिति । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणभिन्नवृत्तिर्हेत्वभावो ग्राह्य इति भावः ।

[ ५ ] प्रतियोगितावच्छेदकसम्बन्धेन वैयधिकरण्यानिवेशेऽयमात्मा ज्ञानादित्यादावव्याप्तिः, आत्मत्वरूपसाध्याभाववति घटादौ विषयतासंबन्धेन ज्ञान-

हेत्वभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः, तत्प्रतियोगित्वं च हेतुतावच्छेदकरूपेण बोध्यम् ।

यत्तो :घटादेर्विषयतया हेत्वभावप्रतियोगिमत्त्वेऽपि नाऽव्याप्तिः । हेत्वभावोऽपीति । अपिना साध्याभाव [१] सङ्ग्रहः [२] तेन विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिः । यद्यपि साध्या-

---

विद्यमानत्वेन तत्र ज्ञानाभावस्य प्रतियोगिव्यधिकरणत्वाभावाल्लक्षणाघटकत्वात् तन्निवेशे तु विवक्षितप्रतियोगितावच्छेदकसम्बन्धेन घटादेर्ज्ञानानधिकरणतया तत्र ज्ञानाभावस्य प्रतियोगिव्यधिकरणत्वेन लक्षणघटकत्वाल्लक्षणसमन्वयान्नाव्याप्तिरित्याह—तेनेति ।

[१]संग्रह इति । साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तिः साध्याभावो लक्षणे ग्राह्य इति भावः ।

[२] तेनेति । साध्याभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्याप्रवेशे गुणकर्मान्यत्वविशिष्टसत्तावान्, जातेरित्यत्रातिव्याप्तिः स्यात्, गुणादौ विशिष्टसत्त्वाभावस्य विशिष्टसत्ताभावप्रतियोगि—विशिष्टसत्त्वात्मकसत्तासमानाधिकरणत्वेन जात्यादावेव तस्य प्रतियोगिव्यधिकरणत्वात् तत्र च जात्यभावस्य सत्त्वात् । प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यविवक्षणे तु गुणादेरपि विशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वशून्यत्वेन गुणादौ साध्याभावस्य प्रतियोगिव्यधिकरणत्वेन तत्र च जात्यभावस्यासत्त्वान्नातिव्याप्तिरिति भावः ।

भावोऽपीत्येवं क्रमेण वक्तुमुचितम्, अपिशब्दादेव हेत्वभावस्य लाभ सम्भवात्, तथापि तत्प्रतियोगित्वञ्चेत्यग्रिमतत्पदेनानिर्दिष्ट त्वभावस्य परामर्शासम्भवात्, हेत्वभावप्रतियोगित्वञ्च इत्यभिधाने च ग्रन्थगौरवादित्थमभिधानम्। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगीति [१] प्रतियोगिपदं प्रतियोगितावच्छेदकताघटक सम्बन्धेनावच्छेदकस्य वैशिष्ट्यलाभाय। तेन ह्रदादौ कालिकादि सम्बन्धेन धूमत्वावच्छिन्नस्य काष्ठादेः संयोगसम्बन्धेन सत्त्वेऽपि नाव्याप्तिः। तत्प्रतियोगित्वं, हेत्वभावप्रतियोगित्वम्। हेतुताव च्छेदकरूपेणेति। हेतुतावच्छेदकसम्बन्धेनेत्यपि बोध्यम्। (२) ते नात्मभिन्नं द्रव्यत्वादित्यादौ साध्याभाववत्यात्मनि वर्त्तमानस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणस्य कालिका दिसम्बन्धेन द्रव्यत्वाभावस्य प्रतियोगित्वेऽपि द्रव्यत्वस्य नातिव्याप्तिः। [३] न च हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्ये कत्यैवातिव्याप्तिवारणसम्भवात्, हेतुतावच्छेदकसम्बन्धेन प्रतियो

---

(१) यदि प्रतियोगितावच्छेदकावच्छिन्नः प्रतियोग्येव भवति तर्हि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणो बोध्य इत्यत्र प्रतियोगिपदं किमर्थ मित्याशंक्याह—प्रतियोगिपदमिति। अत्र प्रतियोगितावच्छेदकताघटकेत्यादे प्रतियोगितावच्छेदकतावच्छेदकसंबन्ध इत्यर्थः। स च प्रकृते समवायः।

(२) हेत्वभावप्रतियोगितायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वनिवेश स्यात्मभिन्नं द्रव्यत्वादित्यत्रासद्धेतावतिव्याप्तिवारणं फलमाह—तेनेति।

[३] नचेति। आत्मभिन्नं द्रव्यत्वादित्यत्र कालिकसंबन्धेनात्मनि प्रतियोगिव्यधिकरणद्रव्यत्वाभावमादाय समागतातिव्याप्तिनिराकरणार्थं हेत्व भावप्रतियोगितायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशितम्। अयमाश

तेन द्रव्यत्वादौ साध्ये विशिष्टसत्तादौ नाऽव्याप्तिः ।

गित्वविवक्षा व्यर्थेति वाच्यम् । [१] तथा सति निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यादौ निर्वह्नित्वभेदमादायैव लक्षणसम्भवे निर्धूमत्वव्याप्येत्याद्युत्तरग्रन्थवक्ष्यमाणाव्याप्त्यलग्नतापत्तेरिति ध्येयम् ।(वस्तुतः निर्वह्नित्वस्य व्याप्यवृत्तितया तद्धेतुस्थले हेत्वभावे प्रतियोगिव्यधिकरणत्वं न देयं व्यर्थत्वात्, परन्तु हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं वाच्यम्, अतः ( २ ) नाग्रिमग्रन्थासङ्गतिरिति ध्येयम् )

हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यविवक्षायाः फलमाह—तेन द्रव्यत्वादाविति ।

---

ज्ञानादित्यत्राव्याप्तिवारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यं प्रतियोगितावच्छेदकसंबन्धेन पुरस्तादेव निवेशितमिति द्विः सम्बन्धनिवेशे गौरवं तदपेक्षया-हेतुतावच्छेदकसम्बन्धेन हेत्वभावे प्रतियोगिवैयधिकरण्यविवक्षणादेवाव्याप्त्यतिव्याप्त्योर्वारणसम्भवाल्लाघवमिति भावः ।

[ १ ] तथा सतीति । अत्रेदं तात्पर्यम् । चतुर्थलक्षणम्परित्यज्य पञ्चमलक्षणानुसरणे निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यत्र चतुर्थलक्षणस्याव्याप्तिं वक्ष्यति दीधितिकारः सा च हेत्वभावप्रतियोगितायां हेतुतावच्छेदकसंबन्धनिवेशेसत्येवोपपद्यते निर्धूमत्वव्याप्याभाववति पर्वतादौ स्वरूपेण निर्वह्नित्वाभावस्यमहानसीयवह्न्यादिस्वरूपस्यावर्त्तमानत्वात् । यदा तु हेत्वभावप्रतियोगितायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वं परित्यज्य हेतुतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यं निवेश्यते तदा हेतुतावच्छेदकस्वरूपसम्बन्धेन प्रतियोगिव्यधिकरणस्य निर्वह्नित्वं नेत्याकारकस्यान्योन्याभावस्य साध्याभाववति पर्वतादौ सत्त्वेन लक्षणसमन्वयादव्याप्तिरसङ्गता स्यादिति ।

( २ ) नाग्रिमेति । हेतुतावच्छेदकस्वरूपसंबन्धावच्छिन्नप्रतियोगिताक

न वा विशिष्टसत्वादिना तादृशाभावप्रतियोगिनि सत्वादावतिप्रसङ्गः। यन्नैकव्यक्तिकं साध्यं

( १ ) अन्यथा साध्याभाववति गुणादौ विशिष्टसत्त्वाभावस्य सत्तारूपप्रतियोगि-समानाधिकरणत्वादव्याप्तिरेव स्यादिति भावः। अत्र तु द्रव्यत्वस्य साध्यतायां साकल्याप्रसिद्ध्याऽव्याप्तेरुक्तविवक्षयाप्यप्रतीकारादादिपदम्, तेन [ २ ] गुणवत्त्वादिसाध्यस्योपग्रहः ( ३ ) द्रव्येतरासमवेतमात्रं वा प्रकृते द्रव्यत्वमिति ध्येयम्। हेतुतावच्छेदकरूपावच्छिन्नप्रतियोगित्वविवक्षायाः फलमाह—नवेति। सत्वादाविति। द्रव्यत्वादौ साध्ये इत्यनुषज्यते। यन्नैकव्यक्तिकमिति। तथा च द्रव्यं पृथिवीत्वादित्यादावव्याप्तिः सकलसाध्याप्रसिद्धेरित्यर्थः। ननु [ ४ ] इतोऽप्यस्वरसात् साध्यसामान्याभावस्यैव

---

निर्वह्निनत्वाभावस्य महानसीयादिवह्निरूपस्य साध्याभाववति सकलान्तर्गते पर्वतादाववृत्तित्वेनाव्याप्तिसङ्गतिरिति भावः।

[ १ ] अन्यथेति। हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यविवक्षाऽभाव इत्यर्थः।

[ २ ] तेन गुणवत्त्वस्येति। तथाच गुणवत्त्वस्य चतुर्विंशतिगुणस्वरूपतया तत्र साकल्यं प्रसिद्धमिति भावः।

( ३ ) द्रव्येतरासमवेतमात्रमिति। अथ वाऽत्र द्रव्यत्वपदेन जातिरूपमनुगतं ( द्रव्येतरासमवेतत्वे सति निखिलद्रव्यसमवेतं ] न ग्राह्यं तस्यैकत्वेन साकल्याप्रसिद्धेः किन्तु द्रव्येतरस्मिन् गुणादावसमवेतं यद्द्रव्यत्वगुणकर्मादि तदेवात्र द्रव्यत्वपदेन विवक्षितं तथा च तन्निष्ठं साकल्यं प्रसिद्धमेवेति भावः

( ४ ) इतोऽप्यस्वरसादिति। इतः—द्रव्यं पृथिवीत्वादित्यत्र साकल्याप्रसिद्ध्याऽव्याप्तेरस्वरसा ( अरुचेः ) दित्यर्थः। अपिना साध्याभाववद्विशेषणस्य साकल्यस्य साध्ये विशेषणत्वायोगरूपो दोषः पूर्वोक्तः समुच्चितः।

विपक्षो वा । तत्र निर्धूमत्वादिव्याप्ये ।

निविष्टत्वात् साध्ये साकल्यं न देयमेवेत्यत आह-विपक्षो वेति (विपक्षः साध्याभाववान्) [१] एकव्यक्तिकमित्यनुषज्यते। तद्घटा-वृत्तिधर्मवान् तद्घटान्यत्वादित्यादावव्याप्तिः। (साध्याभावव तद्घटस्य साकल्याप्रसिद्धेरिति भावः। (साध्याभाववन्निष्ठान्यो-न्याभावप्रतियोगितानवच्छेदकीभूताभावप्रतियोगित्वं वक्तव्यम तो दोषान्तरमाह-निर्धूमेति। कश्चित) [२] ननु साध्यादि-भेदेन व्याप्तेर्भेदात् यत्रैकव्यक्तिरेव विपक्षस्तत्रत्यलक्षणे साध्याभा-ववति साकल्यविशेषणं न देयमिति दोषान्तरमाह-निर्धूमत्वव्या प्य इति [३] निर्धूमत्वस्य साध्यत्वे यत्रैकव्यक्तिकमित्यनेनैव गतार्थता स्यादतो व्याप्यपर्य्यन्तम्, निर्धूमत्वव्याप्यस्यापि

---

(१) एकव्यक्तिकमिति। यत्रैकव्यक्तिको विपक्ष इति लिङ्गविपर्ययेणार्थः। तद्घटावृत्तिधर्मवान् तद्घटान्यत्वादित्यस्य स्थाने "गगनावृत्तिधर्मवान्-गगनान्यत्वात्" इति काशीमुद्रितपुस्तके पाठः।

(२) निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यत्र चरमदोषदानबीज माह—नन्विति। यत्र वह्निसाध्याभावाधिकरणानि तत्रैवाधिकरणे साकल्य विशेषणस्य सार्थक्यादेकमात्रविपक्षस्थले साकल्यविशेषणमनुपादेयमतो न पूर्वोक्त दोषाणामवकाश इतिभावः।

(३) निर्धूमत्व [धूमाभाव] वान् निर्वह्नित्वा [वह्न्यभावात्] दित्यत्रैव व्याप्तिसंभवे व्याप्यपर्यन्तानुसरणे बीजमाह—निर्धूमत्वस्येति। तथाच धूमत्वावच्छिन्नप्रतियोगिताकाभावस्य [निर्धूमत्वस्य] यत्रैकव्यक्तिकमित्यनेन गतार्थत्वेऽपि तद्व्याप्यानां स्नेहजलत्वादीनां बहुत्वेन न तेन गतार्थतेति हृदयम्

तत्वेन साध्ये निर्वन्हित्वादौ चाव्याप्तिस्तद्धे हेत्वभावस्य वन्ह्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वादत आह—साध्यवदिति ।

[१]स्नेहादेः स्नेहत्वादिना साध्यत्वे वन्ह्यभावस्य व्यभिचारित्वादसंग्रहे न दोष इत्यत उक्तं तत्वेनसाध्ये इति। निर्धूमत्वव्याप्यत्वेन साध्ये इत्यर्थः। प्रत्येकमिति।-हेत्वभावस्य महानसीयादिवन्हेः साध्याभाववत्सकलान्तर्गतपर्वताद्यवृत्तित्वा [ २ ] दव्याप्तिरिति भावः। [ ३ ] निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्नसाध्याभावव्यापकतावच्छेदकं निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्नयद्रूपावच्छिन्नाभावत्वं तद्रूपवत्त्वं व्याप्तिरित्युक्तौ तु न दोष इति ध्येयम्। ननु साध्यवत्प्रति योगिकान्यत्वस्य धूमादिमति सत्त्वादव्याप्तिरत आह—

(१)स्नेहादेरिति।निधूमत्वव्याप्यस्तु स्नेहोऽपि तथाच स्नेहवान् निर्वन्हित्वादित्यत्र लक्षणासत्वमिष्टमेव। स्नेहाभाववति भूतलादौ निर्वन्हित्वस्य वृत्तित्वेन तस्य व्यभिचारित्वात यदा तु निधूमत्वव्याप्यत्वेन साध्यत्वं तदा न निर्वन्हित्वस्य व्यभिचारित्वं निर्वन्हित्वाधिकरणे कस्यापि धूमाभावव्याप्यस्य सत्वादितिभावः।

( २ ) अव्याप्तिरिति। निर्वन्हित्वाभावस्तु महानसीयपर्वतीयादिवन्हिसामान्यस्वरूपः, तस्य साध्याभाववत्सकलान्तर्गतपर्वतादिषु प्रत्येकमवर्तमानत्वादिति भावः।

( ३ ) निरुक्तेति। साध्यतावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तिसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकं—प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तिहेतुतावच्छेदकसंबन्धावच्छिन्नयद्रूपा [ हेतुतावच्छेदक ] वच्छिन्नप्रतियोगिताकाभावत्वं—तद्धर्म ( हेतुतावच्छेदक ) वत्त्वमिति पर्यवसितार्थः।

अत्रान्योन्याभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबललभ्यम् ।

अत्रेति। तथाच साध्यवत्पदेन [१] निरूढलक्षणयोपस्थापितस्य साध्यवत्तावच्छिन्नप्रतियोगिताकस्यान्यपदार्थैकदेशेऽन्यत्वे [२]तादात्म्ये नान्वयात् साध्यवति च साध्यवत्त्वावच्छिन्नभेदासत्त्वान्ना व्याप्तिः [ ३ ] गुरुधर्मस्यावच्छेदकत्वोपगमाच्च द्रव्यं पृथिवीत्वादित्यादौ द्रव्यत्वत्वविशिष्टद्रव्यत्ववत्त्वावच्छिन्नभेदाप्रसिद्ध्या नाव्या

---

उक्तविशेषणविशिष्टनिर्धूमत्वाभाववति पर्वतादौ वर्तमानो योऽभावः स घटाभाव एव तत्प्रतियोगितावच्छेदकं घटत्वमनवच्छेदकं निर्वह्नित्वत्वावच्छिन्नप्रतियोगिताकाभावत्वं तादृशनिर्वन्हित्वत्वस्य निर्वन्हित्वे सत्त्वादिति रीत्या ह्रदो निर्धूमत्ववान् निर्वन्हित्वादित्यत्र लक्षणसमन्वयः ।

(१) निरूढलक्षणयेति । अनादिकालिकतात्पर्यवती लक्षणा निरूढलक्षणापदेन बोध्यते । अत्र यद्यपि शक्यसंबन्धरूपा लक्षणा शक्त-पद एव संभवति नतु साध्यवदित्याकारके प्रकृतिप्रत्ययसमुदायात्मके वाक्ये, तस्याशक्तत्वात् तथापि शक्तस्य मतुप्प्रत्ययस्यैव प्रकृतिसहकारेण साध्यवत्त्वावच्छिन्नप्रतियोगिताके निरूढलक्षणा साध्यपदन्तु तात्पर्यग्राहकम् । अथवा वैयाकरणमते नेदम् तन्मते तद्धितवृत्तिस्वीकारात् ।

(२) तादात्म्येनेति । अभेदेनेत्यर्थः । [अभेदस्तादात्म्यमि] ति वचनात् । तथा च साध्यवत्त्वावच्छिन्नप्रतियोगिताकाऽभिन्नो यो भेदस्तदधिकरणनिरूपितवृत्तित्वाभावस्य लक्षणार्थत्वान्नाव्याप्तिरित्यर्थः ॥

(३) अत्र साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्यत्व [ भेद ] पदेन साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकमात्रावच्छिन्नावच्छेदकताकप्रतियोगिताकभेद एव ग्राह्यः, अन्यथा, वन्हिमान् धूमादित्यादौ महानसीयवन्हिमत्त्वावच्छिन्नप्रतियोगिताकभेदमादायाव्याप्तितादवस्थ्यात् । तथाच द्रव्यं पृथिवीत्वादित्यत्राव्याप्तिः, स्वरूपतो द्रव्यत्वापेक्षया द्रव्येतरासमवेतत्वे सति सकलद्रव्यसमवेतत्वरूप-द्रव्यत्वत्वविशिष्ट-द्रव्यत्वस्य गौरवेण प्रतियोगितानवच्छेदकत्वाल्लक्षणाप्रसिद्धेरत आह—गुरुधर्मस्येति ।

नहि भवति नीलो घटो घटान्य इति ।

इति रघुनाथशिरोमणिकृता व्याप्तिपञ्चकव्याख्या दीधितिः समाप्ता ।

प्तिरिति भावः । [ १ ] यद्धर्मविशिष्टबोधकपदसमभिव्याहृतेना न्यादिपदेनोपस्थापितेऽन्यत्वादौ तद्धर्मावच्छिन्नप्रतियोगिताकत्वप्र कारेणैव तादात्म्येनान्वयो ( २ ) न तु तद्धर्माश्रयप्रतियोगिताकत्वे त्यत्र व्युत्पत्तौ प्राचां संवादमाह—नहीति । तथाच तादृशव्युत्पत्त्य स्वीकारे नीलघटे पीतघटप्रतियोगिकभेदसत्त्वात् नीलघटो घटान्य इत्यपि व्यवहारः स्यादिति भावः । ( ३ ) अत्र च द्रव्यं घटान्यदि त्याद्यप्रयोगात् यन्निष्ठप्रतियोगिकत्वेन भेदोऽन्यादिशब्देन बोध्यते तः वृत्तिधर्मस्यैवानुयोगितावच्छेदकत्वात् ( ४ ) तत एव घटो घटान्य इत्यस्य वारणसम्भवात्, नीलघटत्वस्य धर्मितावच्छेदकत्वानुधावन मिति मन्तव्यम् । नीलो घटो घटान्य इत्येव सम्यक् पाठः, ( ५ )

---

( १ ) यद्धर्मेति । यद्धर्मः साध्यवत्त्वरूपो धर्मः तद्विशिष्टबोधकं साध्यवत्पदं, तेन पदेन समभिव्याहृतं सहोच्चारितमन्यादिपदं तदुपस्थापितेऽन्यत्वादावित्यर्थः ।

( २ ) नत्विति । नतु तद्धर्माश्रय—यत्किञ्चित्प्रतियोगिताकत्वेनेत्यर्थः ।

[ ३ ] यत्किञ्चिद्घटे यत्किंचिद्घटप्रतियोगिकभेदसत्त्वमूलको घटो घटान्य इत्य पि व्यवहारो न भवति स एव यद्धर्मविशिष्टेत्यादिव्युत्पत्तिमूलमस्तु, नीलघटत्व स्य धर्मितावच्छेदत्वानुधावनं व्यर्थं घटत्वस्यैव धर्मितावच्छेदकत्वेनेष्टसिद्धेरित्या शंकायामाह—अत्रचेति । व्युत्पत्तिशब्देन समभिव्याहारो बोध्यः ।

( ४ ) तत एवेति । प्रतियोग्यवृत्तिधर्मस्यैवानुयोगितावच्छेदकत्वनिय मादेवेत्यर्थः ।

( ५ ) तथैव । घटान्य इति समस्तपाठे सत्येवेत्यर्थः । प्रकृतोपयो गित्वेति । अत्र प्रकृतमुपमेयभूतं साध्यवदन्येति लक्षणवाक्यं, तच्च साध्यवतोऽ न्यः साध्यवदन्य इति कृतसमासं, तत्र निर्विभक्तिकस्यैव 'साध्यवत्' पदस्य निरूढलक्षणया साध्यवत्त्वावच्छिन्नप्रतियोगिताकबोधजनकत्वं नीलघटो घटान्य इत्युपमानोपन्यासे सोपपादनीयं तत्त निर्विभक्तघटपद एव संगच्छते इति भावः ।

तथैव प्रकृतोपयोगित्वसङ्गतेर्घटादन्य इति पाठस्तु साध्यवदन्य इत्यत्र पञ्चमीसमासे (१) लुप्तविभक्तिस्मारितप्रतियोगित्वे (२) प्रकृत्यर्थतावच्छेदकावच्छिन्नत्वस्य संसर्गमर्य्यादया भानमादृत्य कथञ्चित् सङ्गमनीयः । [३] घटः पटो न इत्यादौ पटपदं मुख्यार्थपरमेव, न तु प्रकृत इव पटत्वावच्छिन्नप्रतियोगिताकपरं, निपातातिरिक्तस्थल एव नामार्थयोर्भेदान्वयस्याव्युत्पन्नतया नञ्पदोपस्थाप्यभेदे पटत्वावच्छिन्न प्रतियोगिताकत्वसंसर्गेणैव पटस्यान्वयसम्भवात् । पटत्वावच्छिन्नप्रतियोगिताकत्वन्तु पटत्वमवच्छिन्नत्वं प्रतियोगित्वञ्चेति त्रितयमेव (४) विशेष्यविशेषणभावापन्नं संसर्गः (५) न तु वस्तुगत्या पटत्वावच्छिन्नं यत् प्रतियोगित्वं तन्मात्रं पटो न इत्यत्र पटत्वावच्छिन्नत्वस्यानुभवसिद्धत्वात्, (६) अन्यथा प्रतियोगिताव्यक्तिभिरेव

(१) लुप्तविभक्तीत्यादेः । 'लुप्तविभक्तिस्मरणोपस्थितप्रतियोगित्वरूपपञ्चमीविभक्त्यर्थे' इत्यर्थः ।

(२) प्रकृत्यर्थतेति । साध्यवत्त्वावच्छिन्नत्वसंबन्धेन विभक्त्यर्थे प्रतियोगित्वे प्रकृत्यर्थस्य साध्यवतोऽन्वयः साध्यवदन्वितप्रतियोगित्वस्य च निरूपकत्वसंबन्धेनाऽन्यपदार्थैकदेशे भेदेऽन्वयः, तथाच साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदबोधः संभवतीति भावः । लुप्तविभक्तेः स्मरणस्यासार्वत्रिकत्वेनात्राऽस्वरसः कथञ्चिदित्युक्त्या सूचितः ।

(३) ननु किं सर्वत्रैव नञ्समभिव्याहारस्थले प्रतियोगिवाचकपदस्य लाक्षणिकत्वम् ? नेत्याह—घटः पटो नेति ।

(४) विशेष्यविशेषणभावेति । निरूपितत्वसंबन्धेन पटत्वविशिष्टं यदवच्छिन्नत्वं स्वरूपसंबन्धेन तद्विशिष्टं यत्प्रतियोगित्वं स एव पटो नास्तीत्यत्र प्रतीतौ प्रतियोगिनोऽभावांशे संसर्ग इति भावः ।

(५) न तु वस्तुगत्येति । वस्तुतो या पटत्वावच्छिन्ना प्रतियोगिता तन्मात्रस्य पटत्वावच्छिन्नत्वाविशिष्टस्य न संसर्गत्वमिति भावः ।

[६] पटत्वावच्छिन्नत्वाविशिष्टस्य प्रतियोगितामात्रस्य संसर्गत्वेऽनुपपत्तिमाह—अन्यथेति ।

(१) तत्तद्विशिष्टबुद्ध्युपपत्तौ पटत्वादेस्तदवच्छेदकत्वमेव न स्यात् (२)मानाभावात्,(३) अत एव केवलान्वयिग्रन्थे वह्निर्नास्तीत्यत्र वह्नित्वमवच्छिन्नत्वं प्रतियोगित्वञ्च संसर्गमर्यादया भासते इति स्वयमप्युक्तम्। ४)इत्थमेव च प्रमेयं नास्ति कम्बुग्रीवादिमान् नास्तीत्यादिशाब्दबोधानां संसर्गकोटावेव प्रतियोगितायां प्रमेयत्वाद्यवच्छिन्नत्वावगाहितया भ्रमत्वं, संसर्गप्रकारसाधारणविशेष्यविशेषणभावस्यैव भ्रमत्वघटकत्वात्,। (५)अन्यथा (परस्परविशेष्यविशेषणभावापन्नसम्बन्धानङ्गीकारे) स्वरूपसम्बन्धेन प्रमेयत्वावच्छिन्नप्रतियोगित्वस्यालीकतया [६] अखण्डतादृशसम्बन्धेन प्रमेयस्याभावधर्मिण्यन्वयास

(१) तत्तद्विशिष्टेति। तत्तत्प्रतियोगिविशिष्टाभावबुद्ध्युपपत्तावित्यर्थः

[२] मानाभावादिति। पटत्वस्य प्रतियोगितावच्छेदकत्वे मानमु प्रतियोगितायां संसर्गमर्यादया पटत्वावच्छिन्नत्ववैशिष्ट्यावगाहित्वमेव तदन-वगाहने पटत्वस्यावच्छेदकत्वमप्रामाणिकमेव स्यादिति भावः।

[३] पटत्वविशिष्टावच्छिन्नविशिष्टप्रतियोगित्वमेव संसर्गो न तु प्रतियोगित्वमात्रमित्यत्र दीधितिकारसम्मतिमप्याह—अत एवेति।

(४) इत्थमेव चेति। मिथो विशेष्यविशेषणभावापन्नप्रतियोगित्वस्य संसर्गविधयाऽवगाहन एवेत्यर्थः।

(५) ननु भ्रमत्वं तदभाववति तत्प्रकारकज्ञानत्वं. तत्तु ज्ञानस्य संसर्गांशे न संभवति संसर्गविशेषणस्य प्रकारत्वाभावादत आह—संसर्गप्रकारेति। संसर्गे प्रकारे च समानो यो विशेषणविशेष्यभावः स एव भ्रमलक्षणघटक इत्यर्थः। तथाच तदभाववद्विशेष्यकत्वे सति तद्विशेषणकं ज्ञानं भ्रम इत्येवभ्रमलक्षणं तच्च ज्ञानस्य संसर्गकोटावपि संभवत्येवेति भावः।

(६) अखण्ड तादृशसम्बन्धेनेति। मिथो विशेषणविशेष्यभावानापन्नप्रमेयत्वावच्छिन्नप्रतियोगित्वरुपाखण्ड [धर्मधर्मिभावशून्य] सम्बन्धस्य रूपत्वेन तेन संबन्धेन प्रमेयस्याभावेऽन्वयो न संभवति सुतरां भ्रमत्वसंपादनं दूरत एव पराहतमिति भावः।

म्बन्धेन भ्रमत्वानुपपत्तेः(१)सदुपरागेणाप्यसतः संसर्गमर्य्यादया भानस्य मणिकृतानङ्गीकारात् । क्लृप्ते न घटत्वाद्यवच्छिन्नप्रतियोगित्वसम्बन्धेन च अभावे प्रमेयस्य सत्वेन तादृशसम्बन्धेन भ्रमत्वस्य वक्तुमशक्यत्वात्, ( २ ) घटत्वादेरन्वयितानवच्छेदकतया तदवच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयत्वादिविशिष्टस्यान्वये निराकाङ्क्षत्वाच्च ( ३ ) अन्यथा घटवत्यपि घटो नास्तीत्यादेः प्रमात्वापत्तेः तत्तत् घटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन घटविशिष्टस्य घटविशेषाभावस्य तत्र सत्त्वात् । ( ४ ) एतेन सत्तासमवायिन्यपि गुणादौ विशिष्टसत्तात्वावच्छिन्नस्य समवायेनासत्त्ववत् घटत्वाद्यवच्छिन्नप्रतियोगित्वसम्बन्धेन घटत्वावच्छिन्नवतोऽपि घटाद्यभावस्य न तादृशसम्बन्धेन प्रमेयत्वाद्यवच्छिन्नवत्त्वमतः प्रमेयं नास्तीत्यादौ घटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेनैव प्रमेयत्वावच्छिन्नस्यैवाभावांशे भ्रमत्वमित्यपि प्रत्युक्तं [ ५ ] घटत्वादेर-

---

[ १ ] ननु प्रमेयत्वावच्छिन्न प्रति योगितात्वेन, स्वरूपसंम्बन्धावच्छिन्न प्रतियोगितात्वेन वा, सद्रूपेण तादृशाळीकप्रतियोगित्वभानं स्यादत आह सदुपरागेणेति । सद्रूपेणेत्यर्थः ।

( २ ) घटत्वादेरिति । यद्धर्मावच्छिन्नस्याऽभावे धर्मिण्यन्वयस्तद्धर्मावच्छिन्नप्रतियोगित्वमेव संसर्गतया भासते तथा चाभावे धर्मिणि प्रमेयत्वावच्छिन्नस्य घटत्वावच्छिन्नप्रतियोगित्वसंबन्धेनान्वयो न भवतीति भावः ।

( ३ ) अन्वयितानवच्छेदकरूपावच्छिन्नप्रतियोगित्वसंबन्धेन यदि प्रतियोगिनोऽभावेऽन्वयः स्यात्तदा दोषमाह—अन्यथेति ।

[४] क्लृप्तेन घटत्वावच्छिन्नप्रतियोगित्वादिपूर्वोक्तसमाधाने सति घटत्वादेरन्वयितानवच्छेदकेत्यादि द्वितीयसमाधानमफलमित्याशङ्कायामाह-एतेनेति । निराकांक्षत्वरूपद्वितीयसमाधानेनेत्यर्थः । प्रत्युक्तमित्यग्रेतनेन चास्यान्वयः ।

[ ५ ] एतेनेत्यादिना सूचितं बीजमाह—घटत्वादेरिति ।

८

न्वयितानवच्छेदकतया तदवच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयत्व-विशिष्टस्यान्वये निराकाङ्क्षतया तथा शाब्दस्यासम्भवादिति ध्येयम् । नीलघटो नास्तीत्यादौ नीलघटत्वस्यान्वयितावच्छेदकत्वे तादृशधर्मावच्छिन्नप्रतियोगित्वमेव संसर्गः, न तु नील-त्वादिप्रत्येकधर्मावच्छिन्नप्रतियोगित्वम्; [ १ ] नीलपटस्य पीतघटस्य चाधिकरणे तादृशप्रयोगापलापापत्तेः। नीलत्वोपलक्षितस्य घटत्वमात्रस्यान्वयितावच्छेदकत्वस्थले तु नीलत्वोपलक्षितघटत्वावच्छिन्नप्रतियोगित्वमेव [ २ ] तथा। संयोगेन घटो नास्तीत्यादौ तृतीयाविभक्तेर्नावच्छिन्नत्वमर्थः ( ३ ) संसर्गीभूतप्रतियोगितायां तदन्वयासम्भवात् (पदार्थापदार्थयोरन्वयस्य निराकाङ्क्षत्वात्, पदार्थः पदार्थेनान्वीयते इति नियमाच्च ) किन्तु अवच्छिन्नप्रतियोगिताकत्वं (४) प्रतियोगितामात्रं वा, अवच्छिन्नत्वसंसर्गेण संयोगादेस्तत्रान्वयादेव ( ५ ) विशिष्टलाभात्। ( ६ ) न चैवं संयोगेन घटाभावस्यैव

---

[ १ ] नीलो घटो नास्तीत्यत्र यदि नीलत्वावच्छिन्नप्रतियोगित्वं, घटत्वावच्छिन्नप्रतियोगित्वं वा संसर्गः स्यात्तदा क्रमशो दोषमाह—नीलपटस्य पीतघटस्य चेति।

[ २ ] तथा। संसर्ग इत्यर्थ। आपत्त्यनुपपत्त्यभावान्नीलत्वोपलक्षित-घटत्वावच्छिन्नप्रतियोगित्वमेव संसर्गतया भासत इत्यर्थः।

( ३ ) संसर्गीभूतेति। संसर्गविधया भासमानघटत्वावच्छिन्नत्वविशिष्टप्रतियोगित्वे तृतीयाविभक्त्यर्थस्याऽन्वयो न संभवति, (पदार्थः पदार्थेनान्वेति न तु पदार्थेन संसर्गादिने ) तिनियमादिति भावः।]

( ४ ) लाघवादाह—प्रतियोगितामात्रमिति।

( ५ ) विशिष्टलाभादिति। संयोगावच्छिन्नप्रतियोगित्वलाभादित्यर्थः।

( ६ ) एवं–तृतीयाविभक्तेरवच्छिन्नप्रतियोगिताकत्वार्थकत्वे, प्रतियोगितामात्रार्थकत्वे वेत्यर्थः।

समवायेन (१) घटविशिष्टद्रव्यत्वाभावतया समवायेन कपाले घटो नास्तीति (२) व्यवहारापत्तिः। तृतीयान्तसमभिव्याहारस्थले (३) तदुपस्थाप्यप्रतियोगित्वस्यैव संसर्गतया भानस्य व्युत्पन्नत्वात् समवायावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावस्य च कपाले विरहात्। (४) अस्तु वा घटत्वावच्छिन्नत्वस्येव संयोगादिसम्बन्धावच्छिन्नत्वस्यापि प्रतियोगित्वांशे संसर्गमर्य्यादयैव भानं तृतीयान्तसमभिव्याहारस्य नियामकत्वाच्च (५) नातिप्रसङ्गः। घटानधिकरणं भूतलम् इत्यादौ तु लक्षणया अधिकरणपदमेव घटाधिकरणार्थकं, घटपदन्तु (६) तात्पर्य्यग्राहकम्, अन्यथाऽनधिकरणपदेन

(१) घटविशिष्टेति। स्वाधिकरणवृत्ति व संबन्धेन [अत्र स्वपदेन घटो ग्राह्यः तस्य संयोगसंबन्धेनाधिकरणे समवायेन वृत्तित्वम्।] घटविशिष्टद्रव्यत्वाभावेत्यर्थः।

(२) व्यवहारापत्तिरिति। संयोगेन घटाभाव—समवायेन घटविशिष्टद्रव्यत्वाभावयोस्समनियताभावत्वादैक्येन यथा घटविशिष्टद्रव्यत्वाभावः समवायावच्छिन्नप्रतियोगिताकः कपाले वर्तते तथा घटाभावोऽपि वर्तते इति कपाले समवायेन घटो नास्तीति व्यवहारापत्तिः स्यादिति भावः।

(३) तदुपस्थाप्येति। तृतीयान्तपदोपस्थाप्येत्यर्थः। तथाच तृतीयान्तपदोपस्थाप्यसमवायावच्छिन्न—घटत्वावच्छिन्नप्रतियोगितासंबन्धेन घटविशिष्टस्याभावस्य कपालेऽसत्वान्न कपाले समवायेन घटो नास्तीति व्यवहारापत्तिरिति भावः।

(४) प्रकारविधया संयोगादिसंबन्धावच्छिन्नत्वस्य निवेशापेक्षया तस्य संसर्गविधया प्रवेशे लाघवमभिप्रेत्याह—अस्तु वेति।

(५) नातिप्रसङ्ग इति। नानपेक्षितसंबंधावच्छिन्नप्रतियोगित्वसंसर्गकाभावधीरित्यर्थः।

(६) तात्पर्यग्राहकमिति। इदं घटपदं घटाधिकरणबोधेच्छयोच्चरितं न तु पटाद्यधिकरणबोधेच्छयेत्याकारकवक्तृतात्पर्यग्राहकं घटपदमित्यर्थः।

अधिकरणसामान्यभिन्नत्वोक्तौ च ( १ ) भूतले तस्य बाधः स्यात्। न च घटान्वितस्यैव अधिकरणस्य भेदस्तत्र नञा बोधनीयः। ( २ ) समासान्तर्गतनञ उत्तरपदार्थमात्रान्वयित्वव्युत्पत्तेः। ( ३ ) अन्यथा नीलाघटो घट इत्यादौ नीलघटान्यस्य घटत्वं नीलाप्रमेयः पट इत्यादौ च नीलप्रमेयान्यस्य पटत्वं ( ४ ) प्रतीयेत। ( ५ ) वस्तुतः ससम्बन्धिकपदस्थले ( ६ ) व्युत्पत्तिवैचित्र्यात् प्रतियोगितानवच्छेदकं घटानधिकरणमित्यादौ घटाद्यन्वितस्यैवाधिकरणादेर्भेदो भासते, ( ७ ) अन्यत्र त्रिपदतत्पुरुषानुपगमेऽपि घटस्य नाधिकरणं प्रतियो-

---

( १ ) भूतले तस्य बाधः स्यादिति। भूतलस्य बहूनां पदार्थानामधिकरणत्वेन तत्राधिकरणत्वावच्छिन्नप्रतियोगिताकसामान्यभेदस्य बाधितत्वादिति भावः।

( २ ) समासान्तर्गतनञ इति। समासान्तर्गतनञर्थस्येत्यर्थः।

( ३ ) अन्यथेति। समासान्तर्गतनञर्थस्योत्तरपदार्थमात्रान्वयित्वव्युत्पत्त्यनङ्गीकारे इत्यर्थः।

( ४ ) प्रतीयेतेति। नीलाघटो घटः नीलाप्रमेयः पट इत्यादयः शब्दा न प्रमाणानि, घटान्यादौ घटत्वादिबोधकत्वात्। परन्तूक्तव्युत्पत्त्यनंगीकारे नीलघटान्यादौ घटत्वादिबोधकत्वेन यथार्थत्वात्प्रमाणं स्यादिति भावः।

( ५ ) अधिकरणपदस्य घटाधिकरणे लक्षणाभ्युपगमे गौरवमभिप्रेत्य लाघवादाह-वस्तुत इति। अत्र ससंबंधिकपदेत्यस्य साकांक्षपदेत्यर्थः।

( ६ ) व्युत्पत्तिवैचित्र्यादिति। साकाङ्क्षपदसमभिव्याहृतसमासान्तर्गतनञर्थस्य पूर्वपदार्थान्वितोत्तरपदार्थान्वयित्वमित्याकारकव्युत्पत्त्यन्तरस्वीकारादित्यर्थः।

( ७ ) ननु न अधिकरणमनधिकरणं घटस्यानधिकरणं घटानधिकरणमिति

गितायां नावच्छेदकमित्यादिरीत्या त्रिपदतत्पुरुषेण विशिष्टलाभसम्भवादिति परमार्थः। पीत : शङ्खो नास्तीत्यादिशाब्दबोधस्तु शङ्खत्वावच्छिन्नतया न प्रतियोगित्वमवगाहते तन्मात्रस्यान्वयितानवच्छेदकत्वात्, शङ्खवत्तया निश्चिते धर्मिण्यपि तादृशप्रयोगात्, परन्तु (१) पीतशङ्खत्वावच्छिन्नप्रतियोगितात्वेन संसर्गमर्यादया प्रतियोगित्वमवगाहते। नञादिपदानां यद्धर्मविशिष्टवैशिष्ट्यावगाहि (२) स्वोपस्थाप्याभावधर्मिकान्वयबोधजनकत्वं तद्धर्मावच्छिन्नप्रतियोगितात्वेन प्रतियोगितासंसर्गकधीजनकत्वव्युत्पत्तेः (३) इयांस्तु विशेषः यत् घटो नास्ति इत्यादिशाब्दबोधे सांसर्गिकप्रतियोगित्वा-

---

समासः ? घटस्य न अधिकरणं घटानधिकरणमिति वा त्रिपदतत्पुरुषसमासः ? तत्र नाद्यः अनधिकरणोपस्थाप्याधिकरणभिन्नैकदेशेऽधिकरणपदार्थे घटपदार्थस्यान्वयासंभवात्। नान्त्यः, त्रिपदतत्पुरुषाऽनुपगमादत आह—अन्येत्विति।

(१) पीतशङ्खत्वेति। पीतत्व-शंखत्वधर्मद्वयावच्छिन्नप्रतियोगितात्वेन विशिष्टं प्रतियोगित्वं संसर्गमर्यादया तत्र भासत इत्यर्थः।

(२) स्वोपस्थाप्येति। स्वं-नञ् पदम्। तदुपस्थाप्योऽभावः (भेदः) तथाच यद्धर्मावच्छिन्नप्रकारतानिरूपकाऽभावत्वावच्छिन्नविशेष्यताशालिबोधो नञ्पदेन भवति तद्धर्मावच्छिन्नप्रतियोगितात्वविशिष्टप्रतियोगिताया एव संसर्गविधया भानमिति भावः।

(३) ननु पीतशंखत्वावच्छिन्नप्रतियोगितात्वेन प्रतियोगित्वावगाहिन्याः पीतः शंखो नास्तीति प्रतीतेः घटो नास्तीति प्रतीतेश्च वैषम्यं न स्यात्तत्रोभयत्रापि सामान्यधर्मावच्छिन्नप्रतियोगित्वस्य संसर्गविधयानवगाहनसाम्यादत आह—इयांस्त्विति।

(१) वगाहिताप्रसिद्धेन घटत्वाद्यवच्छिन्नप्रतियोगितात्वेनैव प्रतियोगिता निरूपिता, पीतः शंखो नास्तीत्यादौ तु पीतशंखत्वावच्छिन्नप्रतियोगितात्वेनाप्रसिद्धेनेत्यादिकं बहुतरमूहनीयम् ।

इति श्रीजगदीशतर्कालंकारविरचिता व्याप्तिपञ्चक-
दीधितिव्याख्या विवृतिः समाप्ता ।






(१) अवगाहितेत्यंशस्य विषयितेत्यर्थः । तथा च घटो नास्तीत्यादिवाक्यजन्यशाब्दबोधनिष्ठा या सांसर्गिकी प्रतियोगित्व–विषयिता सा प्रसिद्धधर्मावच्छिन्नप्रतियोगित्वनिष्ठनिरूपकतानिरूपितनिरूप्यतावतीत्यर्थः । तादृशीप्रसिद्धधर्मावच्छिन्नप्रतियोगितानिरूपिता सांसर्गिक-विषयिता पीतः शंखो नास्तीति शाब्दबोधे नास्तीति वैषम्यन्तयोः प्रतीत्योरिति भावः ।

# सिंहव्याघ्रलक्षण-दीधितिः ।

[ नापीति ] साध्यमसमानाधिकरणं यस्य, यदधिकरणानधिकरणं साध्यं तत्त्वम् । साध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वम् ।

साध्यासामानाधिकरण्यपदस्य साध्यवद्भिन्नवृत्तित्वार्थकत्वे साध्यवैयधिकरण्येत्याद्युत्तरलक्षणेन पौनरुक्त्यापत्तिरतो व्याचष्टे साध्यमसमानाधिकरणं यस्येति। तत्त्वमिति परेणान्वयः। वन्हिमात्रस्यैव व्यधिकरणतत्तद्धूमासमानाधिकरणत्वात् वन्हिमान्धूमादित्यादावव्याप्तेराह—यदधिकरणेति । (१) यदधिकरणमनधिकरणं यस्येति व्युत्पत्त्या यस्याधिकरणं साध्यानधिकरणं तत्त्वमित्यर्थः। तत्तद्धूमाधिकरणं तु न वन्हिसामान्यानधिकरणमतो नाव्याप्तिरिति भावः। ननु घटादिस्वरूपर्यात्किञ्चिद्व्यक्त्यधिकरणं साध्यीभूतधूमाद्यनधिकरणं तद्व्यक्तित्वानधिकरणत्वं वन्ह्यादेरप्यतो धूमवान्वन्हेरित्यादावतिव्याप्तिः। यद्यद्व्यक्त्यधिकरणं साध्यानधिकरणं तत्तद्व्यक्तित्वानधिकरणत्वोक्तौ तु महागौरवमत आह—साध्यनिष्ठेति । साध्यनिष्ठाभावप्रतियोगित्वं सद्धेतोरप्यस्तीत्यतः सामानाधिकरण्याभाव उक्तः। न च साध्यनिष्ठस्य सामानाधिकरण्याभावस्य प्रतियोगित्वं सामानाधिकरण्य एव न तु वन्ह्यादावित्यसद्धेतावतिव्याप्तिः । साध्यनिष्ठाभावप्रतियोगिवृत्तित्वनिरूपकाधिक-

(१) यदधिकरणमिति । अत्र यदधिकरणमनधिकरणं यस्येत्यत्र बहुव्रीहिलभ्योऽन्यपदार्थः साध्य एव परन्तु तत्त्वमित्यत्र तत्पदेन यदधिकरण घटकयत्पदोपस्थाप्यसाध्यासमानाधिकरणस्य जलादे ग्रहणं तत्त्वमपि तत्रैव तत्त्वानधिकरणत्वन्तु भ्रमे हेताविति तात्पर्यम् ।

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमिति यावत्। तदनधिकरणत्वमित्यर्थः। साध्यवद्भिन्नस्य साध्यनिष्ठाधेयत्वानिरूपकत्वात्तद्वृत्तौ नातिप्रसंगः।

रणवृत्तित्वस्य विवक्षितत्वात्। (१) वस्तुतः असामानाधिकरण्यं सामानाधिकरण्यसंबंधेनाभाव इति परमार्थः। (२) न चैवं द्रव्यं विशिष्टसत्वादित्यादावव्याप्तिः। सामानाधिकरण्याभावस्य व्याप्यवृत्तित्वेन साध्यानिष्ठत्वात् एतदस्वरसेनैव वा कल्पांतरानुसरणादित्यपरे। नन्वेवमपि वन्हिमान्धूमादित्यादिविषमव्याप्ते हेतावव्याप्तिः। महानसीयवन्हिनिष्ठस्य पर्वतवृत्तित्वाद्यभावस्य प्रतियोगिभूतं यदाधेयत्वं तन्निरूपके पर्वतादौ धूमादेर्वर्तमानत्वात् साध्यसामान्यनिष्ठाभावप्रतियोग्याधेयतानिरूपकाधिकरणवृत्तित्वोक्तौ च महागौरवमत आह—साध्यनिष्ठाधेयत्वेति। अत्राधेयत्वं साध्यताघटकसंबंधेन ग्राह्यम्। तेन रूपवान्महाकालत्वादित्यादौ संबंधसामान्येन रूपनिष्ठाधेयत्वानिरूपके गगनादौ हेतोरवृत्तित्वेपि नातिव्याप्तिः। तद्वृत्तौ। साध्यवद्भिन्नवृत्तौ। ननु साध्यनिष्ठाधेयत्वानिरू-

(१) असमानाधिकरणपदस्य यथाश्रुतार्थकत्वं लाघवस्यानुसृत्या वस्तुत इति।

(२) नचैवमिति। नचेत्यस्याऽव्याप्तिरित्यग्रेतनेनान्वयः। एवम्-साध्यनिष्ठाभावप्रतियोगिवृत्तित्वादिविवक्षायां साध्ये सामानाधिकरण्यसंबन्धेनाभावविवक्षायां वा इत्यर्थः। गुणावच्छेदेन विशिष्टसत्वसामानाधिकरण्याभावस्य द्रव्यत्वे सत्वात्, उक्तपरम्परया तत्प्रतियोगित्वस्य विशिष्टसत्वे विद्यमानत्वादव्याप्तिः। एवं गुणावच्छेद्यसामानाधिकरण्यसंबन्धेन द्रव्यत्वे विशिष्टसत्वाभावस्य विद्यमानत्वेनाव्याप्तिः।

**साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षस्तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः ।**

पकाधिकरणवृत्तित्वमवश्यं हेतुताघटकसम्बंधेन वाच्यमन्यथा वन्हिनिष्ठाधेयत्वानिरूपके स्वावयवे समवायादिना धूमादेः सत्त्वादव्याप्त्यापत्तेः । तथा च सत्तावान्द्रव्यत्वाद्धूमाद्वेत्यादावव्याप्तिः, साध्यनिष्ठाधेयत्वानिरूपके जात्यादौ समवायेन संयोगेन वा वृत्त्यप्रसिद्धेः । किं च द्रव्यं विशिष्टसत्वादित्यादावव्याप्तिः, द्रव्यत्वनिष्ठाधेयत्वानिरूपकगुणादिवृत्तित्वस्य विशिष्टसत्तायां सत्त्वादित्यत आह–**साध्यनिष्ठेति** । (१) धूमनिष्ठाधेयत्वानिरूपके जलादौ वन्ह्याद्यधिकरणत्वाभावसत्त्वाद्व्यभिचारिण्यतिव्याप्तिरतो व्यापकेति । (२) व्यापकत्वं तु प्रतियोगिवैयधिकरण्याघटितमेव ग्राह्यम् । तेन संयोगेन वन्ह्यधिकरणत्वस्याव्याप्यवृत्तितया तदभावस्य तप्तायःपिंडवृत्तित्वेपि नातिव्याप्तिः। वन्ह्यधिकरणत्व-गगनोभयत्वावच्छिन्नाभावस्य धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वादतिव्याप्तिरतः सामा-

(१) धूमनिष्ठाधेयत्वाऽनिरुपकाधिकरणत्वसमानाधिकरणत्वाभावप्रतियोग्यधिकरणतासामान्यकत्वमित्येव निष्कर्षोऽस्तु, व्यापकत्वनिवेशे गौरवादत आह—धूमनिष्ठेति ।

(२) व्यापकत्वन्त्विति । अत्र व्यापकत्वशरीरेऽभावांशे प्रतियोगिव्यधिकरणत्वं न देयम्, अन्यथा धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्ववति तप्तायःपिण्डादौ वर्तमानो यः प्रतियोगिव्यधिकरणोऽभावः स तु घटाद्यधिकरणत्वाभाव एव ( न तु वन्ह्यधिकरणत्वाभावाऽभावोऽपि, तस्याव्याप्यवृत्तित्वेन वन्ह्यधिकरणत्वाभावरूपप्रतियोगिसमानाधिकरणत्वात ) तदप्रतियोगितया वन्ह्यधिकरणत्वाभावस्य व्यापकत्वेनातिव्याप्तिः स्यादिति भावः ।

**साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणकत्वम् ।**

न्यपदम्। (१) तथा च हेतुतावच्छेदकसंबंधावच्छिन्नयद्धर्मावच्छिन्नाधिकरणत्वसामान्याभावत्वेन साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वं तद्धर्मवत्त्वमर्थः। (२) तेन वन्हिनिष्ठाधेयत्वानिरूपकाधिकरणजलादौ कालिकसंबंधेन धूमाधिकरणतायाः सत्त्वेपि नाव्याप्तिः। (३) न वा वन्ह्यधिकरणत्वाभावस्यापि प्रमेयत्वादिना धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वेप्यतिव्याप्तिः। न च हेतुतावच्छेदकसम्बंधेन यद्धर्मावच्छिन्नाभावत्वेन तादृशाधिकरणताया व्यापकत्वमित्यस्यैव सम्यक्त्वेऽधिकरणत्वाभावपर्यंतानुप्रवेशो व्यर्थ इति वाच्यम्। वृत्त्यनियामकसंबंधेन हेतुतायामव्याप्तिप्रसंगात्, तादृशसंबंधावच्छिन्नप्रतियोगित्वाप्रसिद्धेः। अस्माकं तु तादृशसंबंधेन यद्धेतुसंबंधित्वं तस्य स्वरूपसंबंधावच्छिन्नाभावप्रतियोगित्वमादाय लक्षणसंभवात्। (४) किं चाधिकरणत्वाप्रवेशे वन्ह्यादेः साध्यत्वे संयोगादिसंबंधेन रूपादिहेतावतिव्याप्त्यापत्तिः। संयोगेन रूपाद्यभावस्य केवलान्वयितया वन्हिनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वादिति भावः॥

**साध्यवद्भिन्नेति।** (५) अत्रापि साध्यवद्भिन्नत्वव्यापकाभावप्र-

---

(१) सामान्यपदोपादानेन कथमतिव्याप्तिनिरास इत्याह–तथा चेति।

(२) हेतुतावच्छेदकसंबन्धावच्छिन्नत्वप्रवेशस्य फलमाह–तेनेति।

(३) अधिकरणत्वसामान्याभावत्वावच्छिन्नव्यापकत्वविवक्षायाः फलमाह–नवेति।

(४) वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकत्वाभ्युपगमे पूर्वोक्तदोषाभावेऽप्याह–किञ्चेति।

(५) अत्रापीति। हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मा [हेतुतावच्छेदका] वच्छिन्नाधिकरणत्वसामान्याभावत्वावच्छिन्नं साध्यवद्भिन्नत्वव्यापकत्वं भवति तद्धर्मवत्त्वमित्यर्थः।

चरमाधिकरणत्वांशस्यानतिप्रयोजनकतया तदपहाय द्वयमेकोक्त्या अनूद्य दूषयति [ तदुभयमपीति ] साध्ये-त्यादेः, साध्यं यदधिकरणानधिकरणं तत्त्वाभावः, साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावश्चार्थः ।

तियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षो बोध्यः । तेन सत्तावान्द्रव्यत्वादित्यादौ नाव्याप्तिः । ननु प्रागुक्तस्यार्थस्य शब्दान्तरेणाभिधानमनुवादः स चात्रासंभवी, साध्यं यदधिकरणानधिकरणं तत्त्वानधिकरणत्वस्य साध्यवद्भिन्नवृत्तित्वानधिकरणत्वस्य च प्रागुक्तस्य साध्यानधिकरणानधिकरणत्वशब्देनाबोधनादत आह—चरमेति । ( १ ) तत्त्वाधिकरणत्वाभावे तत्त्वाभावस्याप्रवेशाद्वैयर्थ्यमसंभवीत्यत उक्तम्—अनतिप्रयोजनकतयेति । तथा च प्रकृतलक्षणवाक्यस्य साध्यं यदधिकरणानधिकरणं तत्त्वाभावे साध्यस्य यदनधिकरणं तद्वृत्तित्वाभाव एव च तात्पर्यात् प्रागभिप्रेतार्थस्य शब्दान्तरेणाभिधानमेवानुवादः स चात्र संभवत्येवेति भावः । साध्यमित्यादि । ( २ )साध्यान-

(१) तत्त्वाधिकरणत्वाभाव इति । साध्यमसमानाधिकरणं यस्य तत्त्वाधिकरणत्वाभावः, साध्यवद्भिन्नवृत्तित्वाधिकरणत्वाभावश्च, तत्त्वाभाव–साध्यवद्भिन्नवृत्तित्वाभ्यामतिरिक्तः । तथा चातिरिक्ताभावेनातिरिक्ताभावस्य न वैयर्थ्यमिति भावः, वैयर्थ्यस्वरूपन्तु पूर्वमेव निर्दिष्टम् ।

[ २ ] साध्यासामानाधिकरण्यानधिकरणेत्यादिलक्षणवाक्यद्वयस्य क्रमशः 'यस्याधिकरणं साध्यानधिकरणं तत्त्वाभावः' 'साध्यवद्भिन्नवृत्तित्वाभावश्च' विवक्षितोऽर्थः स च मूलस्थ—'तदुभयमपि साध्यानधिकरणे' त्याद्यनुवादेन यथा लभ्यते तादृशं समन्वयं दर्शयति—साध्यानधिकरणेत्यादाविति । तथा च साध्यानधिकरणेत्याद्यनुवादघटकसाध्यपदोत्तरनञर्थस्य यस्याधिकरणमित्यादिनिर्दिष्टनिष्कर्षान्तःपातिचरमाधिकरणत्वेन साकमन्वयात् प्रथमलक्षणनिष्कर्षस्य लाभ इति भावः ।

(तत्र) केवलान्वयिनि साध्यनिष्ठाधेयत्वानिरूपकाधिक-रणाप्रसिद्ध्या, नानाव्यक्तिसाध्यके च एकसाध्यव्यक्ति-निष्ठाधेयत्वानिरूपकाधिकरणत्वं साधनाधिकरणव्य-क्त्यन्तरस्येत्यव्याप्तिः । क्वचिद्व्यभिचारिण्यतिप्रसंग-श्चाद्ये, द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वा-वच्छिन्नप्रतियोगिताको भेदो विवक्षितस्तदा केवला-न्वयिनि, यदि च यत्किंचित्साध्यवद्व्यक्तिभेदस्तदा नानाधिकरणसाध्यके सर्वत्राव्याप्तिः ।

धिकरणेत्यादौ मध्यवर्तिनञो व्यत्यासेन चरमाधिकरण‌त्वांशेन सहान्वयादेव तल्लाभ इत्याशयः । केवलान्वयिनीति । अव्या-प्तिरिति परेणान्वयः । अव्याप्तेर्हेतुमाह–साध्यनिष्ठेति । नानाव्य-क्तिसाध्यके चेति मूलोक्तं धूमहेतुमभिप्रेत्य,तेन शब्दवान् गगनत्वादित्या-दौ नानाव्यक्तिसाध्यकाव्याप्तिविरहेऽपि न क्षतिः । न्यूनतां परिहरति-क्वचिदिति । विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिरित्यर्थः । (१)विशिष्टधर्मावच्छिन्नाधिकरणत्वस्येव तदवच्छिन्नाधेयत्वस्यान-तिरिक्तत्वादिति भावः । यत्किञ्चिदिति । साध्यवत्तद्व्यक्ति-त्वावच्छिन्न इत्यर्थः । नानाधिकरणसाध्यकेति । यत्र साध्य-तावच्छेदकावच्छिन्नाधिकरणं नाना तत्रेत्यर्थः । तेन कस्याञ्चिदपि

(१) विशिष्टधर्मेति । यथा विशिष्टधर्मावच्छिन्नाधिकरणत्वमतिरिक्तं तथा विशिष्टधर्मावच्छिन्नाधेयत्वं नातिरिक्तमित्यर्थः । अथ वा वक्ष्यमाणगुरु-मतानुसारेण यथा विशिष्टाधिकरणत्वं नातिरिक्तं तथा विशिष्टाधेयत्वमपि नाति-रिक्तमिति यथाश्रुत एवार्थः ।

**केचित्तु साध्यासामानाधिकरण्यं-हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणे तेनैव सम्बन्धेन साध्यवद्वृत्तित्वाभावस्तदधिकरणभिन्नत्वमर्थः ।**

वन्हिव्यक्तेर्नानाधिकरणवृत्तित्वविरहेपि न वन्हिसाध्यकधूमाद्यसंग्रहः । [ सर्वत्र ] केवलान्वयिनि तद्भिन्ने च । सार्वभौममतमुत्थापयति । **केचित्त्विति** । **हेत्वधिकरण इति** । सप्तम्यर्थोऽवच्छेद्यत्वं तच्च साध्यवद्वृत्तित्वाभावेऽन्वितम् । **तेनैवेति**। हेतुतावच्छेदकसम्बन्धेनैवेत्यर्थः तस्य च साध्यवद्वृत्तित्वेन सहान्वयः। साध्यवत्त्वमपि येन संबंधेन येन रूपेण साध्यता तत्संबंधेन तद्रूपावच्छिन्नवत्त्वं बोध्यम् । तेन समवायेन वन्हेः साध्यत्वे धूमे विशिष्टसत्वसाध्यके सत्वादौ च ( १ ) नातिव्याप्तिः । **तदधिकरणभिन्नत्वमिति** । तदत्यन्ताभाववत्वोक्तौ द्रव्यं सत्वादित्यादावतिव्याप्तिः गुणाद्यवच्छेदेन द्रव्यवृत्तित्वाभावस्यैव द्रव्यावच्छेदेन सत्तायामभावसत्त्वादतो भिन्नत्वपर्यन्तानुसरणम् । भेदस्तु नाव्याप्यवृत्तिः, तदव्या-

---

( १ ) नातिव्याप्तिरिति । यदि साध्यतावच्छेदकसम्बन्धेन साध्यवत्व निवेशो लक्षणे न स्यात्तदा समवायेन वन्हेः साध्यत्वे धूमादावतिव्याप्तिः स्यात्, हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणावच्छेद्यो यः संयोगसंबन्धेन वन्हिमन्निरूपित वृत्तित्वाभावस्तदधिकरणभिन्नत्वाद्धूमादेरिति । साध्यतावच्छेदकावच्छिन्नत्वाप्रवेशेतु विशिष्टसत्तावान् सत्वादित्यत्रातिव्याप्तिः, निरुक्तहेत्वधिकरणावच्छेदेन सत्वात्मकसाध्यवन्निरूपितवृत्तित्वाभावाधिकरणभिन्नत्वात्सत्वस्येति । तदुपादाने तु नोक्तदोषाविति भावः ।

एतेन धूमस्य स्वावयवे संयोगेन वन्हिमति च समवाये नावृत्तावपि न क्षतिः ।

प्यवृत्तित्वे तु तादृशवृत्तित्वाभाववती यावती व्यक्तिस्तत्तद्भेदकूटवत्त्वं ( १ ) वक्तव्यमिति भावः ॥ हेतुतावच्छेदकसंबंधेन हेत्वधिकरण इत्यस्य फलमाह—स्वावयवे संयोगेनेति । अवृत्तावपि न क्षतिरित्यन्वयः । तथाच तादृशसम्बन्धेन हेत्वधिकरणत्वाप्रवेशे स्वावयवावच्छेदेन धूमस्य वन्हिमत्संयुक्तत्वाभाववत्त्वाद्वन्हिमान्धूमादित्यादावव्याप्तिः स्यान्न पुनरसंभवः। इदं वाच्यं ज्ञेयत्वादित्यादिकेवलान्वयिनि ( २ ) लक्षणसंभवादिति भावः । अत्र चोत्पत्तिकालावच्छिन्ने घटे पृथिवीत्वे रूपवद्वृत्तित्वं नेत्यादिप्रतीत्या घटाद्यवच्छेदेन पृथिवीत्वादौ रूपवद्वृत्तित्वाभावाभ्युपगमे हेत्वधिकरणनिष्ठमवच्छेदकत्वं निरवच्छिन्नं ग्राह्यम् । तेन रूपवान् पृथिवीत्वादित्यादौ नाव्याप्तिः । तत्र घटनिष्ठावच्छेदकत्वस्योत्पत्तिकालेनावच्छेदादिति ध्येयम् । तेनेत्यस्य फलमाह–वन्हिमति च समवायेनेति। हेतुतावच्छेदकसंबन्धेन साध्यवद्वृत्तित्वानुक्तौ सम्बन्धसामान्येन हेत्वधिकरणावच्छेद्यसाध्यवद्वृत्तित्वसामान्याभावो न निवेश्यः। सा-

---

( १ ) वक्तव्यमिति । भेदस्याव्याप्यवृत्तित्वेऽपि तत्तद्व्यक्तिभेदस्याव्याप्यवृत्तित्वानभ्युपगमान्न दोष इति भावः ।

( २ ) लक्षणेति । इदं वाच्यं ज्ञेयत्वादित्यत्र येन केनापि संबन्धेन ज्ञेयत्वाधिकरणावच्छेदेन वाच्यत्ववद्वृत्तित्वाभावाधिकरणभिन्नत्वेन ज्ञेयत्वे लक्षणसमन्वयादित्यर्थः ।

**ताद्दशाभावश्च सम्बन्धान्तरेण तत्रैव वर्तमाने सुलभः ।**

धनाधिकरणाद्यवच्छेद्य (१) तादृशाभावस्याप्रसिद्धेः. किंतु यत्किंचित्संबंधेन साध्यवद्वृत्तित्वाभावःप्रवेशनीयः। तथाच हेत्वधिकरणपर्वताद्यवच्छेदेन धूमादौ वन्हिमत्समवेतत्वाद्यभावसत्वादसंभव एव स्यात् यदि तेनैव संबंधेन साध्यवद्वृत्तित्वप्रवेशो न स्यादिति भावः। ननु हेत्वधिकरणावच्छेद्यत्वविशिष्टस्य साध्यवद्वृत्तित्वाभावस्याधिकरणाप्रसिद्धया लक्षणमिदमसंभवि, (२) तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकतया गगनजलत्वादौ वन्हिमत्पर्वतसंयुक्तत्वाभावस्य धूमवत्पर्वतानवच्छेद्यत्वादत आह–ताद्दृशाभावश्चेति। हेत्वधिकरणावच्छेद्यसाध्यवद्वृत्तित्वाभावश्चेत्यर्थः । **संबंधान्तरेण** हेतुतावच्छेदकसंबंधान्यसम्बन्धेन। तथाच हेतुमत्पर्वतावच्छेद्यत्वविशिष्टस्य वन्हिमत्संयुक्तत्वाद्यभावस्याधिकरणत्वं पर्वतीयरूपादावेव प्रसिद्धमिति भावः। यद्यपि रूपादौ वन्हिमत्संयुक्तत्वाद्यभावस्य व्याप्यवृत्तित्वात् तत्र पर्वतादिकं नावच्छेदकं भावाभावयोरेकत्र वृत्त्यर्थमेवावच्छेदकस्वीकारादित्यप्रसिद्धितादवस्थ्यम् । न च महानसादिसंयुक्ते (३) कालिकादिसंबंधेन पर्वतादिनिष्ठघटादौ वन्हिमत्संयुक्त

(१) तादृशाभावस्येति । साध्यवन्निरुपितसम्बन्धसामान्यावच्छिन्नवृत्तित्वसामान्याभावस्याप्रसिद्धे रित्यर्थः । सम्बन्धसामान्यः वच्छिन्न साध्यवद्वृत्तित्वाभावस्य हेत्वधिकरणावच्छेद्यत्वासंभवादिति भावः ।

(२) तदधिकरणस्यैवेति । अयमभिप्रायः, वन्हिमन्निरूपितवृत्तित्वाभावो गगनजलत्वादौ प्रसिद्धः तन्निष्ठ ( गगनजलत्वादिनिष्ठ ) वृत्तित्वाभावस्य तदधिकरण ( जलत्वाद्यधिकरणं ) मेवावच्छेदकं न तु हेत्वधिकरणं पर्वतादिरित्यप्रसिद्धयाऽसंभव इति ।

(३) तदधिकरणमेव तन्निष्ठधर्मावच्छेदकमिति नियममाश्रित्याह कालिकसंबन्धेन पर्वतादिनिष्ठेति ।

त्वाभावस्य पर्वताद्यवच्छेद्यत्वप्रसिद्ध्या न दोष इति वाच्यम्। (१) इत्थमपि एतद्रूपवानेतद्रसादित्यादावेतद्रसाधिकरणावच्छेदेन एतद्रूपवत्समवेतत्वाभावस्याप्रसिद्धेर्दुर्वारत्वात्। तथापि पर्वतावच्छेदेन तदीयरूपेन वन्हिमत्संयुक्तत्वमित्यादिप्रतीत्या व्याप्यवृत्तेरवच्छेदकत्वस्वीकारादित्थमभिधानं। (२) हेतुतावच्छेदकसंबंधेन साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याधिकरणं हेत्वधिकरणं तदन्यत्वे वा ग्रंथतात्पर्यम्। तथा च व्याप्यवृत्तेरवच्छेदकासत्वेऽपि साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याधिकरणं (साधनाधिकरणं) तद्भिन्नत्वमादायैव लक्षणसंगतिः। न च वस्तुगत्या साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याधिकरणं हेत्वधिकरणं तदन्यत्वोक्तौ वन्हिमान्धूमादित्यादावव्याप्तिः, स्वावयवावच्छेदेन वन्हिमत्संयुक्तत्वाभाववतो धूमस्याधिकरणतायाः साधनवत्पर्वतादौ सत्वात् (३) साध्यवद्वृत्तित्वविशिष्टयद्व्यक्तित्वावच्छिन्नाधिकरणत्वम् हेतुमतस्तदन्यत्वोक्तौ तु वन्हिमान् धूमादिदं वाच्यं ज्ञेयत्वादित्यादौ

---

(१) इत्थमपीति। अत्र जलपरमाणुनिष्ठतद्रूपरसयोः साध्यसाधनभावो बोध्यः। तथा च हेत्वधिकरणे परमाणौ कालिकसंबन्धेन पदार्थमात्रस्य वृत्त्या यदधिकरणेत्यादिनियमानुसारेण हेत्वधिकरणावच्छेद्यसाध्यवद्वृत्तित्वाभावस्याप्रसिद्ध्याऽव्याप्तिरिति भावः।

(२) व्याप्यवृत्तेरवच्छेदकानंगीकारेऽप्याह—हेतुतावच्छेदकेति। तथा च हेतुतावच्छेदकसंबन्धावच्छिन्नवन्हिमद्वृत्तित्वाभावविशिष्टस्य यस्या (पर्वतीयरुपादेः) धिकरणं धूमाधिकरणं तदन्यत्वं (रूपान्यत्वं) धूमादाविति लक्षणसमन्वयः।

[३] स्वावयवावच्छेदेन वन्हिमद्वृत्तित्वाभावविशिष्ट-यद्व्यक्तित्वा [तद्धूमव्यक्तित्वा] वच्छिन्नाधिकरणत्वं हेत्वधिकरणस्य तद्व्यक्तिभिन्नत्वं महानसीयधूमे वर्त्तते एवं यद्व्यक्तिपदेन महानसीयधूमादिग्रहणे तदन्यत्वं पर्वतीय-धूमे वर्त्तते। तथाच वन्हिमान् धूमादित्यत्र लक्षणसमन्वय सम्भावनामाशङ्क्यासम्भवेन निराकरोति–साध्यवदिति।

व्यभिचारिणस्तु व्यभिचारनिरूपकाधिकरण एव तादृश्यि तादृशाभाववत्त्वम्। सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमित्यनुभवात्। न चैवं गुणकर्मान्यत्वविशिष्टसत्वेऽव्याप्तिः।

सर्वत्रैवासंभवः, साध्यवदसंयुक्तत्वादिविशिष्टतत्तद्रूपादिव्यक्तित्वस्य (१) गुरुतया (प्रमेयरूपत्वावच्छिन्नायाः प्रतियोगिताया इव) तदवच्छिन्नाधिकरणत्वाप्रसिद्धेः, केवलस्यातिप्रसंग एव विशिष्टधर्मस्याधिकरणतानिरूपकतावच्छेदकत्वकल्पनादिति वाच्यम्। सार्वभौमानां मते प्रतियोगिताया इवाधिकरणताया अपि गुरुधर्मावच्छेद्यत्वोपगमात्। अन्यथा समवेतत्वत्वादिकमपेक्ष्य सत्तावत्समवेतत्वत्वस्य गुरुतया साध्यवद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धया सत्तावान्द्रव्यत्वादित्यादावव्याप्तिप्रसंगात्। ननु साध्यसामानाधिकरण्यवतो न तदभाववत्त्वमतो द्रव्यं सत्वादित्यादौ व्यभिचारिण्यतिप्रसंग इत्यत आह—व्यभिचारिणस्त्विति। तादृशीति। हेतुताघटकसम्बन्धेन हेतुमतीत्यर्थः। तादृशाभाववत्त्वं साध्यवद्वृत्तित्वाभाववत्त्वं। अत्रैवानुभवं प्रमाणयति—सत्तायामित्यादि। एवं—सत्तायामपि द्रव्यत्वसामानाधिकरण्यविरहे। विशिष्टसत्व इति। (२) विशिष्टसत्वशब्दप्रतिपाद्यहेतावित्यर्थः।

---

(१) गुरुतयेति। तत्तद्व्यक्तित्वापेक्षया साध्यवदसंयुक्तत्वादिविशिष्टतत्तद्व्यक्तित्वस्य गुरुत्वादित्यर्थः।

(२) विशिष्टेति। विशिष्टसत्वशब्दप्रतिपाद्यविशिष्टे हेतावित्यर्थः। यदि विशिष्टसत्ताव्यक्तिमात्रेऽव्याप्तिर्विवक्षिता भवेत्तर्हि विशिष्टसत्वस्यातिरिक्तत्वादित्येवमुत्तरणीयम्। विशिष्टस्यातिरिक्तत्वादित्युत्तरेण ज्ञायते यद्विशिष्टहेतुमात्रेऽव्याप्तिर्विवक्षितेत्यर्थः।

विशिष्टस्यातिरिक्तत्वात् ।

यथाश्रुते गुणकर्मान्यत्वविशिष्टसत्ताव्यक्तावव्याप्त्याशंकायामुत्तरग्रंथेन तदनिरासादसंगत्यापत्तेः । अतिरिक्तत्वादिति । विशेष्यविशेषणाभ्यां भिन्नत्वादित्यर्थः । तथा च गुणादिकं न हेत्वधिकरणमतो नाव्याप्तिः । उभयत्वमप्येकविशिष्टापरत्वमेव तच्चातिरिक्तमेव नातः स्पर्शवान् मूर्तत्वभूतत्वोभयस्मादित्यादावव्याप्तिरिति भावः । यद्यपि हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छेदेनेत्युक्तावपि विशिष्टसत्तादिहेतौ नाव्याप्तिः । न च धूमाधिकरणमहानसाद्यवच्छेदेन पर्वतीयादिधूमे वन्हिमत्संयुक्तत्वाभावस्य (चालनीन्यायेन) सत्त्वादव्याप्तिः महानसादेरपि कालिकादिसम्बंधेन पर्वतीयधूमाधिकरणत्वात् तत्र साध्यवद्वृत्तित्वाभाववत्तायामवच्छेदकत्वादिति वाच्यम्।(१) स्वावच्छिन्नाधिकरणावच्छेद्यसाध्यवद्वृत्तित्वाभाववदवृत्तिधर्मवत्त्वमित्यस्यैव फलितार्थस्य तत्तद्धूमत्वधर्ममादायैव लक्षणसंभवेन धूमत्वस्य हेतुतानवच्छेदकत्वेपि क्षत्यभावात् । तथापि विशिष्टस्यातिरिक्तत्वात्तत एवाव्याप्तिवारणसंभवे हेतुतावच्छेदकावच्छिन्नाधिकरणत्वप्रवेशे गौरवम् (२) असंभवो वा विशिष्टनिरूपकाधिकरणत्वाप्रसिद्धेः । ( ३ ) एवं धूमत्वादेर्व्याप्यतानवच्छेदकत्वे ताद्रू-

( १ ) स्वावच्छिन्नेति । स्वपदेन धूमत्वं ग्राह्यम् । धूमत्वावच्छिन्नाधिकरणमहानसावच्छेद्यवन्हिमद्वृत्तित्वाभाववति पर्वतीयधूमेऽवर्त्तमानतद्धूमत्व [ महानसीय धूमत्व ] वत्त्वाद्धूमे लक्षणसमन्वयः ।

( २ ) नन्वतिरिक्तपदार्थाभ्युपगमापेक्षया लक्षणे हेतुतावच्छेकावच्छिन्नत्वनिवेशे गौरवं न दोषावहमत आह—असम्भवो वेति ।

( ३ ) ननु हेतुतावच्छेदकधर्मे स्वा [ हेतुतावच्छेदका ] श्रययन्निष्ठाधिकरणतानिरूपितनिरुपकतानवच्छेदकत्त्वयत्किञ्चिन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वोभयाभावस्तदवच्छेद्यसाध्यवद्वृत्तित्वाभाववदवृत्तिधर्मवत्त्वविवक्षणे नासंभव इत्याशंकायामाह—एवमिति । तद्धूमत्वेन हेतोरुपन्यासो भवेन्नतु धूमत्वेनेति भावः ।

ण्येण कथायां हेतोरुपन्यासो न स्यादित्याशयः । ननु विशिष्टसत्वस्यातिरिक्तत्वे मानाभावः । न च गुणो विशिष्टसत्तावानिति प्रतीत्यभाव एव मानम् । गुणस्य विशिष्टनिरूपिताधिकरणत्वविरहादेव तादृशप्रतीत्यसंभवात् । न च विशिष्टनिरूपितमधिकरणत्वं यद्यतिरिक्तं तदा विशिष्टमेवातिरिक्तमस्तु; विशिष्टाधिकरणतायाः क्लृप्ताधिकरणस्वरूपत्वाभ्युपगमात् । किंच विशिष्टस्यातिरिक्तत्वे द्रव्यं विशिष्टसत्तावदिति निर्णयदशायामपि द्रव्यं न सत्तावदिति प्रत्ययप्रसंगः, सत्ताभाववुद्धिं प्रति सत्तानिश्चयस्यैव विरोधितया तदसत्वात् । स्वातंत्र्येण (१) विरोधितांतरकल्पने गौरवात् । एवं विशेषणविशेष्योभयग्राहकसामग्रीविरहेपि विशिष्टग्रहप्रसंगः । तदुभयग्राहकसामान्यविशिष्टस्य ग्रहे हेतुत्वकल्पनेपि गौरवांतरं स्फुटमेवेत्यत आह—

**अनतिरिक्तत्वे त्विति** । गुरवस्तु विशिष्टस्यातिरिक्तत्वादिति ग्रन्थस्य विशिष्टनिरूपिताधिकरणत्वस्यातिरिक्तत्वादित्यर्थः । तथाच हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छेदेन तादृशवृत्तित्वाभाववत्त्वमपि निवेश्यमतो नाव्याप्तिरित्याशयः । ननु विशिष्टाधिकरणत्वं यदि (२) नातिरिक्तं, (३) विशिष्टसत्तावानिति प्रतीतेः प्रत्येकनिरूपिताधिकरणताद्वयावगाहितयैवोपपत्तेः । अन्यथा विशेषणाभावनिर्णयदशायामपि विशिष्टसत्तावत्त्वप्रतीत्यापत्तेः । विशिष्टसत्तावुद्धौ विशेषणाभाववत्ताज्ञानस्य प्रतिवंधकतायाः स्वातंत्र्येण कल्पनापा-

(१) विरोधितान्तरेति । सत्वाभाववुद्धिं प्रति विशिष्टसत्तानिश्चयत्वेनातिरिक्तप्रतिवन्धकत्वकल्पने गौरवमित्यर्थः ।

(२) नातिरिक्तमिति विशेषणाधिकरणत्व–विशेष्याधिकरणत्वाभ्यां नातिरिक्तं लाघवादित्यर्थः ।

(३) ननु यदि विशिष्टाधिकरणत्वं नातिरिक्तं तदा गुणादावपि विशिष्टसत्तावानिति प्रतीतिः स्यादत आह–विशिष्टसत्तावानिति । तथा च यत्र गुण

अनतिरिक्तत्वे तु विशेषणविशेष्यसंबंधस्यैव परं परया व्याप्तत्वात्। केवलान्वयिनि चाव्याप्ते रभिधानं द्वितीयलक्षणाभिप्रायेणेत्याहुस्तच्चिन्त्यम् । सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिर्हि—

तादित्युच्यते तदाप्याह—अनतिरिक्तत्वे त्विति प्राहुः । विशेषणेति । विशेषणं गुणकर्मान्यत्वं, विशेष्यं सत्ता, तयोः सामानाधिकरण्यात्मकसंवंधस्यैवेत्यर्थः । साक्षात्संवन्धेन तस्य व्यभिचारित्वादाह-परंपरयेति ।अवच्छेदकताख्यस्वरूपसंबंधेनेत्यर्थः। सत्वगुणकर्मान्यत्वयोर्द्रव्ये एव सामानाधिकरण्यमिति प्रतीत्यावच्छेदकतासम्बन्धेन तदुभयसामानाधिकरण्यस्य द्रव्य एव सत्त्वान्न व्यभिचार इति भावः । नन्वेवं ज्ञेयत्वाधिकरणपटाद्यवच्छेदेन वाच्यत्ववद्वृत्तित्वाभावस्य पटीयरूपादावेव सत्त्वात्तदधिकरणभिन्नत्वमस्त्येव ज्ञेयत्वादिहेतोरित्यग्रे केवलान्वयिन्यव्याप्तिप्रदर्शनमसंगतमत आह—केवलान्वयिनीति । द्वितीयेति । तत्र साध्यवद्भिन्नस्याप्रसिद्धत्वादिति भावः । यद्यपीदं वाच्यं प्रमेयादित्यादौ तादात्म्येन केवलान्वयिनि हेतौ प्रथमलक्षणेऽव्याप्तिः संभवति प्रमेयावच्छेदेन वाच्यत्ववत्तादात्म्यकत्वविरहिणोऽप्रसिद्धेः । न च घटाद्यवच्छेदेन वाच्यत्ववत्तादात्म्यविरहो घटत्वादौ सुलभः, तथा सति घटत्वं घटेन वाच्यमिति प्रतीत्यापत्तेः तथापि (१)स्वाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वा-

कर्मान्यत्वरूपं यद्विशेषणं यश्च सत्त्वात्मको विशेष्यः प्रत्येकं तदुभयाधिकरणत्वावगाहित्वेन न गुणादौ तादृशप्रतीतेः प्रमात्वमिति भावः ।

( १ ) स्वाधिकरणनिरूपितेति—तत्तद्धेत्वधिकरणानुयोगिकहेतुतावच्छेदकसंसर्गेणेत्यर्थः ।

द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमिति प्रतीतिवत्सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वस्य भावोऽत्र लक्षणघटक इत्यभिप्रायेण द्वितीयलक्षणाभिधानम्। स्वपदस्य तत्तत्साधनव्यक्तिपरतया तादात्म्येन पटात्मकहेत्वधिकरणीभूतपटव्यक्तिनिरूपिततादात्म्येन वाच्यत्ववत्तादात्म्यकत्त्वाभावस्य, पटावच्छेदेन पटत्वादावेव प्रसिद्धेः । वस्तुतस्तु केवलान्वयित्वं वृत्तिमदत्यंताभावाप्रतियोगित्वमात्रं नत्ववच्छेदकगर्भम् । तथाच तादात्म्येन किंचिदपि प्रमेयं (१) न केवलान्वयीति द्वितीयलक्षणे एव तादृशकेवलान्वयिन्यव्याप्तिसंभवात् । यथाश्रुतमेव सम्यगिति ध्येयम् । नव्यास्तु केवलान्वयिनि चाव्याप्तेरिति केवलान्वयिसामान्येऽव्याप्तेरभिधानं द्वितीयलक्षणाभिप्रायेणेत्यर्थः । प्रथमलक्षणे यत्किंचित्केवलान्वयिनि तादात्म्येन प्रमेयादिहेतावव्याप्तावपि न क्षतिरित्याहुः । सत्तायां गुणेन द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिः सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यस्यावच्छेदकत्वाभावं गुणादाववगाहते इत्यत्र समानाकारकप्रतीतिं दृष्टांतयति—द्रव्यत्वे गुण इति । न तूक्तप्रतीते गुणावच्छेदेन द्रव्यत्वे पृथिवीत्वसामानाधिकरण्याभावो विषयः गुणस्य द्रव्यत्वानधिकरणतया तन्निष्ठपृथिवीवृत्तित्वाभावावच्छेदकत्वासंभवात्, किंतु द्रव्यत्वनिष्ठं यत्पृथिवीत्वसामानाधिकरण्यं तदवच्छेदकत्वाभाव एव गुणे विषय इति तद्वदियमपीतिभावः । अवच्छेदकत्वस्येति ।

---

(१) न केवलान्वयीतीति । तादात्म्येन प्रमेयादेरपि वृत्तिमदत्यन्ताभावप्रतियोगित्वानपेक्षितकेवलान्वयित्वाभावत्त्वेन तत्र प्रथमलक्षणसमन्वयो न प्रतिज्ञाविरोधी । यस्तु गगनाभावादिस्तादृशकेवलान्वयी तत्र न प्रथमलक्षणाव्याप्तिः किन्तु साध्यवद्भिन्नत्वाप्रसिद्ध्या द्वितीयलक्षणस्यैवेति भावः ।

परंपरासंबन्धेन सामानाधिकरण्यस्य वा अभावं गुणेऽवगाहते न तु सत्तायामेव द्रव्यवृत्तित्वाभावं, सत्ता न द्रव्यवृत्तित्वाभाववती

(१) प्रात्यक्षिकप्रत्ययाभिप्रायेणेदं, सत्तायां गुणेन द्रव्यत्वसामानाधिकरण्यमित्यादिशाब्दस्थलेऽवच्छेदकत्वोपस्थापकपदांतरविरहात्तदभावस्य गुणादौ बोधयितुमशक्यत्वात्, किन्तु सत्तानिष्ठं द्रव्यत्वसामानाधिकरण्यं न गुणावच्छेद्यमित्याकार एव तत्र बोधः, गुणादावित्यत्र (२) सप्तम्यर्थस्य नञर्थेऽन्वयादिति ध्येयम् । नन्वेवं तादृशप्रतीतेः सामानाधिकरण्याभावविषयकत्वमनुभवसिद्धं विरुध्येत । सामानाधिकरण्यस्य व्याप्यवृत्तित्वेन तदवच्छेदकत्वाप्रसिद्ध्या तादृशावच्छेदकत्वाभावविषयकप्रतीते (३) भ्रमत्वापत्तिश्च स्यादत आह परंपरासंबंधेनेति । निरूपकताख्यस्वरूपसम्बन्धेनेत्यर्थः । (४) न त्ववच्छेदकताख्यस्वरूपसम्बन्धेनेत्यर्थः । तथा सति सत्तायां द्रव्ये न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिप्रसङ्गात् । सामानाधिकरण्यस्य व्याप्यवृत्तितया कुत्राप्यवच्छेदकत्वसम्बन्धेन तस्यासत्वात् । नत्विति । तथा च द्रव्यं सत्वादित्यादावतिव्याप्तिरितिभावः । ननूक्तदृष्टांत-

(२) प्रात्यक्षिकेति । इन्द्रियसन्निकृष्टा योग्याश्च ये पदार्थास्तेषां सर्वेषां प्रत्यक्षे भानं संभवत्यतः प्रत्यक्षे पदानुपस्थितस्याप्यवच्छेदकत्वपदार्थस्याभावविशेषणतया भानं भविष्यति न तु तादृशशाब्दबोधे पदानुपस्थापितत्वादिति भावः।

(३) सप्तम्यर्थस्यावच्छेद्यत्वस्य नञर्थेन्वय इतिभावः ।

(१) भ्रमत्वापत्तेरिति । निरूपितत्वसम्बन्धेन सामानाधिकरण्यशून्येऽवच्छेदकत्वे सामानाधिकरण्यावगाहित्वेनोक्तप्रतीते भ्रमत्वमित्यर्थः ।

[ २ ] पूर्वं परम्परासंबन्धेनेत्यस्यावच्छेदकतासंबन्धेनेत्यर्थस्स्वीकृतः स एवात्रापि कुतो न गृह्यतेऽत आह—नत्ववच्छेकतेति ।

द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरित्यादिसर्वजनप्रसिद्धप्रतीतिबाधितत्वात्। बाधकाभावात्तु संयोगतदभावयोरवच्छेदकभेदेनैकत्र प्रतीत्या तदुभयोरेकत्र सिद्धिः।

स्थले बाधकसत्त्वादवच्छेदकत्वाभावोऽस्तु प्रतीतेर्विषयः प्रकृ तेतु साक्षात्सामानाधिकरण्याभावविषयकत्वे न किंचिद्बाधकमस्तीत्यतो बाधकमाह—सत्ता नेति । तथा च सत्तायां द्रव्यवृत्तित्वाभावसत्वे द्रव्यवृत्तित्वाभाववद्भिन्नत्वधीस्तत्र न स्यादिति भावः । ननु द्रव्यवृत्तित्वाभावोऽव्याप्यवृत्तिरेवेति तद्वद्भेदोप्यवृत्तिर्वाच्यः तथा च द्रव्यगुणात्मकविभिन्नावच्छेदेन तयोः सत्तायां समावेशात्कुतो विरोध इत्यत आह (१) द्रव्यवृत्तित्वाभाव इति । नन्वेवं मूले न कपिसंयोगीति प्रतीत्या वृक्षादौ कपिसंयोगाभावोपि न सिद्धेयत्तत्रापि वृक्षनिष्ठसंयोगावच्छेदकत्वाभावस्य मूलेऽवगाहनसंभवादत आह—बाधकाभावादिति । कपिसंयोगाभावो न वृक्षवृत्तिरित्यादिप्रत्ययस्यासंभवादिति भावः। ननु द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरिति प्रतीतिरेवासिद्धा द्रव्यवृत्तित्वाभावो गुणावच्छेदेन सत्तावृत्तिरिति प्रत्ययात् ॥ (२) एकशेषस्य कर्तुमशक्यत्वादतो दोषान्तरमाह–अतीन्द्रियेति। मनस्त्ववदणुत्वादित्यादावित्यर्थः। तत् । अतीन्द्रियसाध्यकेऽसद्धेतौ । ननु प्रत्यक्षासंभवेप्यणुत्वं

---

(१) द्रव्यवृत्तित्वाभाववतीति । तथा च द्रव्यवृत्तित्वाभावे सत्तावृत्तिभिन्नत्वनिश्चयेन सत्तायां गुणावच्छेदेन द्रव्यवृत्तित्वाभावस्य बाधितत्वादिति भावः ।

(२) एकशेषस्येति । 'गुणावच्छेदेन द्रव्यवृत्तित्वाभावः सत्तावृत्तिः' इति प्रत्ययो न भवति 'द्रव्यवृत्तित्वाभावो न सत्तावृत्तिः' इत्येव प्रत्ययो भवतीत्याकरक एकप्रतीतिपरिशेषः कर्त्तुं न शक्यते विनिगमनाविरहादित्यर्थः

अतींद्रियसाध्यके व्यभिचारिण्यतिप्रसंगाच्च, तत्र सामानाधिकरण्याभावस्य प्रत्यक्षत्वासंभवेनासिद्धेः। नच तदभाववद्वृत्तित्वेन तत्र तदनुमेयम्। तद्वद्वृत्तिभिन्नत्वस्योपाधित्वात्॥ किञ्च इदमिदानीमितिप्रतीतिनियामकविशेषणताविशेषेण हेतुतायां सद्धेतावव्याप्तिः। तेन संबंधेनाधिकरणे काले तेन संबंधेन साध्यवद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः॥

इति सिंहव्याघ्रलक्षणदीधितिः समाप्ता।

---

मनस्त्वसामानाधिकरण्याभाववन्मनस्त्वाभाववद्वृत्तित्वात् पृथिवीत्ववदित्यनुमानेनैव तत्र सामानाधिकरण्याभावः सेत्स्यतीत्यत आह—न चेति। तद्वद्वृत्तीति। साध्यवद्वृत्तिभिन्नत्वस्येत्यर्थः। तथा चोक्तानुमाने मनस्त्ववद्वृत्तिभिन्नत्वमुपाधिस्तस्य च साध्यव्यापकत्वं घटत्वादौ साधनाव्यापकत्वं द्रव्यत्वादौ ग्राह्यम्। (१) भेदस्याव्याप्यवृत्तित्वे तु साध्यवद्वृत्तितत्तद्व्यक्तित्वावच्छिन्नभेदकूट उपाधि र्बोध्यः। ननूक्तोपाध्यप्रतिसंधानदशायामुक्तानुमानादेव साध्यवद्वृत्तित्वाभावसिद्धिस्तत्र भविष्यति। अन्यथा व्याप्त्यंतरस्यापि तत्रातिप्रसङ्गादित्यत आह—किंचेदमित्यादि। तथाच

---

[१] ननु मनस्त्वाभाववद्वृत्तित्वरूपहेत्वधिकरणे द्रव्यत्वादौ पृथिव्यावच्छेदेन मनस्त्ववद्वृत्तिभिन्नत्वस्य सत्त्वमस्त्येव भेदस्याव्याप्यवृत्तित्वात्तथा च नोक्तोपाधेः साधनाऽव्यापकतेत्यत आह—भेदस्याव्याप्यवृत्तित्वेत्विति तथाच द्रव्यत्वव्यक्तेरपि मनस्त्ववद्वृत्तित्वेन तद्व्यक्तिभेदस्य व्याप्यवृत्तित्वेन द्रव्यत्वादावसत्त्वेनोक्तकूटस्योपाधित्वं भवति साधनाव्यापकत्वादिति भावः।

कालो गोमान् गोत्वादित्यादौ कालिकसम्बंधेन हेतावव्याप्तिः; कालिकसम्बंधेन हेतुमति महाकाले तेन सम्बंधेन कालवृत्तित्वाभावस्य कुत्राप्यसत्वात् । न च कालावच्छेदेन गगनादावेव साध्यवद्वृत्तित्वाभावस्य प्रसिद्धिः, कालस्य गगनाद्यनधिकरणत्वेन तन्निष्ठवृत्तित्वाभावे कालावच्छेद्यत्वासंभवात् कालिकसम्बंधेन गगनादेर्वृत्तिमत्त्वस्वीकाराच्च । यद्यपि गोत्वाद्यधिकरणतत्तत्क्षणावच्छेदेन कालवृत्तित्वाभावस्य तत्तत्क्षणासमानकालीने तत्तत्क्षणगोचरज्ञाने प्रसिद्धिः, (१) तत्तत्क्षणस्यापि विषयतया स्वविषयकज्ञानाधिकरणतयातन्निष्ठतादृशवृत्तित्वाभाववत्तायामवच्छेदकत्वसंभवात् । तथापि महाकाल एव कालिकसम्बन्धेनाधिकरणं उपाधीनां तु (२) तत्तद्वृत्तितायामवच्छेदकत्वमात्रमिति प्राचीनसिद्धांतमनुरुध्येदम् । (३) महाकालनिरूपितविशेषणतया वा हेतावव्याप्तिर्द्रष्टव्या, इदमिदानीमित्याकारकप्रतीतिनियामकविशेषणताया यो विशेषस्तेन हेतुतायामिति व्याख्यया तादृशविशेषणतायाः प्राप्तेः सामान्यत एव विभिन्नकालीनयोर्नाधाराधेयभाव इति मते नानुपपत्तिगन्धोपि । स्वासमानकालीनस्य विषयतयाप्यनधिकरणत्वेन तदवच्छेदेन ज्ञाने साध्यवद्वृत्तित्वाभावप्रसिध्यसम्भवादिति ध्येयम् । (४) अत्र हेतुतावच्छेदकसम्बन्धेन स्वाधि-

---

[१] तत्तत्क्षणासमानकालिकतत्तत्क्षणगोचरज्ञानोपादानस्य प्रयोजनमाह तत्तदिति ।

(२) तत्तद्वृत्तितायामिति । तत्तत्पदार्थनिष्ठमहाकालनिरूपितवृत्तितायामुपाधीनामवच्छेदकत्वमित्यर्थः ।

(३) महाकालनिरूपिते त्यस्य महाकालानुयोगिकत्वविशिष्टविशेषणता [ कालिक ] संबन्धेनेत्यर्थः ।

[४] सार्वभौमपरिष्कारे निर्दोषत्वं प्रदर्शयन्नाह—अत्रेति । स्वाधिकरणे

करणे स्वानिरूपितहेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वाभावस्य विवक्षायां न कोऽपि दोषः। साधनीभूतगोत्वाधिकरणमहाकालावच्छेदेन गोत्वनिरूपितकालिकसम्बंधेन साध्यवद्वृत्तित्वाभावस्य घटादावेव प्रसिद्धत्वात्। (१) साध्यसामानाधिकरण्यं यद्धर्मावच्छिन्नाधिकरणावच्छेद्यहेतुवृत्तिकात्यंताभावप्रतियोगितानवच्छेदकं तद्धर्मवत्त्वं वा विवक्षितम्। इत्थं च वाच्यं प्रमेयादित्यादौ प्रमेयव्यक्तीनां भेदेपि न व्याप्तेर्भेद इत्यस्मद्गुरुचरणाः। (२) केचित्तु स्वनिष्ठं यत्साध्यवद्वृत्तित्वं हेत्वधिकरणावच्छेद्यतदभावाधिकरणभिन्नत्वमित्यर्थतादृशाभावाधिकरणत्वं सद्धेतुस्थले स्वभिन्नव्यक्तावेव प्रसिद्धमतो नाव्याप्तिरित्याहुः। साध्यवद्वृत्तित्वाभावाधिकरणत्वसामान्ये यन्निष्ठत्व यदधिकरणावच्छेद्यत्वोभयाभावस्तत्त्वं व्याप्तिः। (३) पर्वतीयरूपनिष्ठं यत्पर्वतावच्छेद्यं वन्हिमत्संयुक्तत्वाभावाधिकरणत्वं न तद्धूमनिष्ठं यच्च धूमनिष्ठं न तद्धूमाधिकरणावच्छेद्यम् (४) अधिकरणभेदेन तस्य

---

स्वनिरूपिते त्यत्र स्वापदद्वयं हेतुपरम्। निरूपितत्वं प्रतियोगिकत्वरूपं बोध्यम्। तथा च हेतुप्रतियोगिकत्वविशिष्ट हेतुतावच्छेदकसंबन्धावच्छिन्न साध्यवद्वृत्तित्वाभावस्य लक्षणघटकत्वान्न कोऽपि दोष इति भावः।

(१) साध्येति–अत्र यद्धर्म-तद्धर्म–पदाभ्यां हेतुतावच्छेदकधर्मो धर्तव्यः

(२) केचित्त्विति–अत्र स्वापदं हेतुपरम्।

(३) ननूभयाभावनिवेशापेक्षया लाघवात्प्रत्येकाभाव एव निवेशनीय इत्याशंक्याह—पर्वतीयेति तथा च प्रतियोगिविधया य (धूम) न्निष्ठत्वोपादानाभावे पर्वतीयरूपनिष्ठवह्निमद्वृत्तित्वाभावाधिकरणतायां धूमाधिकरणपर्वतावच्छेद्यत्वसत्त्वेनाव्याप्तिः, य (धूम) दधिकरणावच्छेद्यत्वानुपादानेऽन्यावच्छेदेन धूमनिष्ठवह्निमद्वृत्तित्वाभावाधिकरणत्वे यन्निष्ठत्वस्य सत्त्वादव्याप्तिरिति भावः।

(४) ननु धूमाधिकरणमहानसावच्छेदेन पर्वतीयधूमनिष्ठे वन्हिमद्वृत्ति

नानात्वात् ।(१)अन्यथा पर्वते तदीयरूपे न वन्हिमत्संयुक्तत्वमितिवत्पर्वते धूमे न वन्हिमत्संयुक्तत्वमित्यादिप्रतीत्यापत्तेः। (२)अतो वन्हिमान्धूमादित्यादौ नाव्याप्तिः। व्याप्यवृत्तेरवच्छेदकास्वीकारे तु तादृशाभावाधिकरणत्वसामान्ये यदधिकरणावच्छेद्यत्वसामान्याभावस्तत्त्वमित्येव वाच्यमित्यादिकं पुन(३)रुदक्षरत्वादुपेक्षितं। वाच्यत्वादिसाध्यके तादात्म्येन हेतावव्याप्तेश्च वाच्यत्ववत्तादात्म्याभावाप्रसिद्धेः। (४)एतेन सत्तायां कर्मणि न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतौ कर्मण इव कर्मसत्वयोः समवायस्याप्यवच्छेदकत्वं भासते। अन्यथा इदानीं सत्तायां न द्रव्यत्वसामानाधिकरण्यमित्यादिप्रतीत्यापत्तेः। एतत्कालस्य कर्मानतिरेकात्। एवं च यद्धेतुव्यक्त्यधिकरणीयहेतुतावच्छेदकसम्बन्धे साध्यवद्वृत्तित्वाभावावच्छेदकत्वं नास्ति (५) तत्त्वमित्यर्थः।

---

त्वाभावाधिकरणत्वे यन्निष्ठत्व-यदधिकरणावच्छेद्यत्वोभयसत्वेनाव्याप्तितादवस्थ्यमत आह—अधिकरणभेदेनेति। तस्य अवच्छेद्यत्वस्येत्यर्थः। तथाच यद्यपि धूमाधिकरणमहानसावच्छेद्यत्वमस्ति तादृशाधिकरणत्वे, तथापि धूमाधिकरण-पर्वतावच्छेद्यत्वाऽभावसत्त्वाल्लक्षणसमन्वय इति भावः।

(१) अन्यथेति—यद्यधिकरणभेदेनावच्छेद्यत्वमतिरिक्तं न स्यात्तदा 'पर्वते धूमेनेत्यादि' प्रतीत्यापत्तिः स्यादित्यर्थः

(२) अतः—अवच्छेद्यत्वस्याधिकरणभेदेन भिन्नत्वादित्यर्थः

(३) उदक्षरत्वादि—स्यस्य यथाश्रुतमूलाक्षराननुसारित्वादिति तत्त्वम्।

(४) कालो गोमान् गोत्वादित्यत्राव्याप्तिवारकं केषांचित्परिष्कारं निराकरोति-एतेनेति। उदक्षरत्वेन-वाच्यत्व-साध्यक-तादात्म्येन हेतावव्याप्त्या चेत्यर्थः। अस्य निरस्तमित्यग्रिमेणान्वयः।

(५) तत्त्वमिति। यद (गोत्वा) धिकरणकालानुयोगिककालिक सम्ब-

कालो गोमान् गोत्वादित्यादौ कालवृत्तित्वाभावावच्छेदकत्वस्य (१) द्रव्यत्वादिनिष्ठ आत्मसमवेतत्वादौ प्रसिद्धस्य गोत्वाधिकरणीयकालिकसम्बन्धे विरहान्नाव्याप्तिरित्यपि निरस्तमिति संक्षेपः ॥

इति सिंहव्याघ्रलक्षणयो जागदीशी टीका समाप्ता ।







---

न्धस्य पूर्वोक्तनियमेन कालवृत्तितावच्छेदकत्वेन कालवृत्तित्वाभावावच्छेदकत्वाभावसत्त्वाल्लक्षणसमन्वयः ।

(१) अभावस्य सन्मात्रप्रतियोगिकत्वेन प्रतियोगिनः सत्त्वं दर्शयति द्रव्यत्वादीति ।

इति काशीस्थ न्यायाचार्य शुक्लोपनामक श्रीगिरीशशर्म्म विरचिता मूलार्थबोधिनी टिप्पणी समाप्ता ।

* श्रीः *

# व्याप्तिपंचक

## माथुर्याः क्रोडपत्रम् ।

साध्याभाववदवृत्तित्वलक्षणे साध्याभाववद्वृत्तिनोऽभावो यत्रेति बहुव्रीहिसमासादेव तादृशाधिकरणलाभाद्वृत्तपदोत्तरं मत्वर्थीयप्रत्ययो न भवितुमर्हतीति दोषोद्घाटनं प्राचीनमते (न कर्मधारयान्मत्वर्थीयो बहुव्रीहिरि) त्यादिना मथुरानाथेन कृतम् ।

अत्रेयमाशङ्का–ननु तदुत्तरं वस्तुतस्त्वित्यादिकल्पेऽपि साध्यस्याऽभावः साध्याभावः स यत्रास्त्यसौ साध्याभाववान् इत्यत्र साध्यस्याभावो यत्रेति बहुव्रीहिणा तादृशार्थलाभसंभवात्कथं साध्याभावपदोत्तरं साध्यस्याभाववानिति षष्ठीतत्पुरुषाश्रयणान्न दोष इति वाच्यम् । न सापेक्षे कृत्तद्धितसमासा इत्यनेनैव विरोधात् । इति चेदुच्यते–यत्र मत्वर्थीयप्रत्ययेन यद्यदर्थः प्रत्याय्यते तत्र यदि बहुव्रीहिणा तत्तदर्थः प्रत्याय्येत तदैव तादृशव्युत्पत्तेरादरो नतु सर्वत्र। अत्र तु तादृशप्रत्ययस्य यथाधिकरणार्थकता तथा प्रशंसार्थकता च । प्रशंसा चात्राभावनिष्ठसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वम् । तथा च बहुव्रीहिणाऽधिकरणत्वलाभेऽपि न तादृशार्थलाभसंभवः । नच प्राचीनमतेऽपि अवृत्तपदोत्तरमत्वर्थीयप्रत्ययस्य वृत्तित्वत्वावच्छिन्नप्रतियोगिताकत्वरूपाभावनिष्ठप्रशंसाबोधकत्वमसम्भवान्न दोष इति वाच्यम् । तत्र नञ्पदस्यैवान्वयितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावत्वविशिष्टबोधकत्वात् । नञ्पदस्य [illegible]-

कारे पुनर्घटवत्यपि घटो नास्तीति प्रत्ययापत्तिस्तत्र घटनिष्ठप्रतियोगिताकाभावसत्वात्। नच साध्याभाववानित्यत्राभावपदादेव तादृशार्थलाभः सम्भवतीतिवाच्यम्। अभावपदस्य तादृशार्थबोधकत्वात्। अत एव दीधितौ साकल्यघटितलक्षणे साध्याभावपदेन साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावो विवक्षितः। अन्यथा तत्र साध्याभावपदेनैव तादृशार्थलाभसम्भवाद्विवक्षाया निष्फलत्वापत्तिरिति ध्येयम्॥ १॥

तादृशवृत्तित्वसामान्याभाव इत्यस्य—

साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्ति यत्प्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकत्वं तद्भिन्ना सती या अभावत्वनिष्ठावच्छेदकत्वभिन्नावच्छेदकता, तदनिरूपकं यदभावनिष्ठावच्छेदकत्वं तद्भिन्ना सती या अधिकरणत्वनिष्ठावच्छेदकत्वभिन्नावच्छेदकता तदनिरूपकं यदधिकरणनिष्ठावच्छेदकत्वं तद्भिन्ना सती या वृत्तितात्वनिष्ठावच्छेदकत्वभिन्नावच्छेदकता तदनिरूपकं यद्वृत्तित्वनिष्ठं प्रतियोगित्वं तन्निरूपकोऽभाव इत्यर्थः। उक्तरूपवृत्तित्वञ्चावच्छेदकतायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन महानसीयवन्हिमान् धूमादित्यत्र वह्न्यभाववदवृत्तित्वमादायातिव्याप्तिवारणाय तादृशावच्छेदकतायां निरुक्तसम्बन्धेन उक्तरूपवृत्तित्वं निवेशितम्। धूमवान् वह्नेरित्यत्र ह्रदवृत्तित्वविशिष्टधूमाभाववदवृत्तित्वमादायातिव्याप्तिनिरासाय प्रथमनिरूपकान्तं, धूमाभाववद्ध्रदावृत्तित्वमादायातिव्याप्तिवारणाय द्वितीयमनिरूपकान्तमवच्छेदकताविशेषणं, धूमाभाववद्वृत्तित्वजलत्वोभयाभावमादायातिव्याप्तिवारणाय च तृतीयमनिरूपकान्तं प्रतियोगिताविशेषणं बोध्यमिति॥ २॥

साध्यतावच्छेदकसम्बन्धावच्छिन्नेत्यादि !—

ननु साध्यतावच्छेदकावच्छिन्नेत्यस्य साध्यतावच्छेदकेतरानवच्छिन्नार्थकतयैवोपपत्त्या किमत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशेनेति चेन्न । समवायिनः संयोगेन साध्यतायां समवायेन संयोगिनोऽभाव-मादायाव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणस्य सार्थक्यात् । स्वनिरूपितसंसर्गानवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकोऽभाव इति तदर्थः ॥ ३ ॥

नन्वत्र लक्षणे प्रतियोगितापदं व्यर्थमिति चेन्न ।

अभावत्वप्रकारकप्रमाविशेष्यमभावत्वादित्यत्र अधिकरणस्याधेयतानिरूपकत्वेन तादृशविशेष्यत्वरूपसाध्यनिष्ठाधेयतानिरूपको यो घटाद्यभाव स्तद्वृति पटाद्यभावे हेतोर्वृत्तेरव्याप्तिवारणाय तस्य आवश्यकत्वात् ॥ ४ ॥

अभावत्वरूपानुयोगिताया अपि निरुक्तप्रतियोगिताकतया तत्रैवाव्याप्तिवारणायाभावपदमपि । इत्थञ्च निरुक्तप्रतियोगिताकत्वाभावत्वरूपधर्म्मद्वयावच्छिन्नाधिकरणताया अभावेऽसत्त्वात् न तत्राव्याप्तिरिति ॥ ५ ॥

अथात्र साध्याभावाधिकरणनिरूपितस्याभावनिवेशनैवोपपत्तौ तादृशवृत्तित्वाभावनिवेशः किमर्थ इति चेन्न ।

तथा सति हेत्वभावस्यापि साध्याभावाधिकरणतया तन्निरूपितप्रतियोगिताया हेतौ सत्त्वेन वह्निमान् धूमादित्यादावव्याप्त्यापत्तेः ।

यद्यपि वह्निमान् धूमादित्यादावेतल्लक्षणाव्याप्तिः, हेत्वधिकरणताया अपि साध्याभावाधिकरणत्वेन तन्निरूपितवृत्तित्वस्य हेतौ सत्त्वात्, तथापि—स्वनिरूपितत्वस्वनिष्ठाधिकरणतानिरूपितत्वोभ

यसम्बन्धेन साध्याभावाधिकरणविशिष्टं यद्वृत्तित्वं तदभावस्य विवक्षितत्वात्। वस्तुतस्तु निरूपितत्वसम्बन्धेन साध्याभावाधिकरणविशिष्टं यद्वृत्तित्वं तदभावो निवेश्यः निरूपितत्वञ्च विशिष्टप्रतीत्यनुरोधात् कुत्रचिदेव वृत्तितायां कस्यचित् सम्बन्धो न तु सर्वेषां सर्वत्र, एवञ्च धूमाधिकरणतायां धूम इत्यप्रत्ययात् न तन्निरूपितवृत्तित्वं धूम इति लक्षणसमन्वये न कोऽपि दोषः ॥ ६ ॥

नन्वत्र कालिकसम्बन्धेन पर्वतादेः साध्याभावाधिकरणतया वह्निमान् धूमादिति प्रसिद्धस्थल एवाव्याप्तिसंभवे गुणत्ववान् ज्ञानत्वादित्यादिस्थलान्तरानुसरणमनर्थकमिति चेन्न। जन्यमात्रस्य कालोपाधित्वमनङ्गीकर्तृ मते तत्राव्याप्तिविरहात्। विषयिताया-वृत्त्यनियामकत्वमनुस्मृत्याह–अव्याप्यत्वेति। ननु कालिकतादात्म्यादिघटिताव्याप्यत्वसंबन्धेनापि गुणत्ववान् ज्ञानत्वादित्यत्राव्याप्तिसम्भवे सत्तावानित्यादिस्थलान्तरानुसरणमनर्थकमितिचेन्न। जन्यमात्रे। कालोपाधित्वानंगीकारेण वृत्त्यनियामकसम्बन्धघटिताव्याप्यत्वस्य वृत्त्यनियामकत्वेन च तत्र दोषदानस्य पूर्ववदेवासंगतेः। ज्ञानत्वहेतुम्परित्यज्य जातिरूपहेत्वन्तरानुसरणे बीजन्तु सत्त्वसाध्यकस्थले जातेः प्रसिद्धहेतुत्वम् अव्याप्यत्वसम्पादनसौकर्यञ्चेति ॥ ७ ॥

साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्साध्यनिरूपितप्रतियोगितानिवेशे समवायेन प्रमेयसाध्यके सामान्यपदव्यावृत्त्यसंभवाद्विषयितादिसम्बन्धेन तत्साध्यानुसरणमिति ॥ ८ ॥

आत्मत्वप्रकारकप्रमाविशेष्यत्वाभाववान् आत्मत्वादिति—

अत्र साध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाश्रयीभूतस्य साध्याभावस्य साध्यसामान्यीयप्रतियोगितावच्छेदकसंबन्धेनाधिकरणे वृत्तित्वं हेतौ व्याप्तिरित्युक्तौ विशेष्य

त्वाभावसाध्यके अव्याप्त्यभावादात्मत्वप्रकारकेत्यादि । एवं प्रमापद मप्यत्राव्याप्तिदानार्थम् अन्यथा आत्मत्वप्रकारकभ्रमप्रमासाधारण ज्ञानविशेष्यत्वस्यापि केवलान्वयितया स्वरूपसम्बन्धावच्छिन्नप्रति- योगित्वानधिकरणतया धर्तु मशक्यत्वात् ॥ १० ॥

पूर्वक्षणादिवृत्तित्वविशिष्टसाध्याभावमादायाव्याप्तिवारणाय- साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वेनाभावनिवेशः ॥ ११ ॥

कालिकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्यापि साध्य वत्त्वेन साध्यतावच्छेदकधर्म–संबंधावच्छिन्न वृत्तितानिरूपकतया तन्निष्ठकालिकसंबन्धावच्छिन्नप्रतियोगितामादायाव्याप्तितादवस्थ्यात् प्रतियोगितापदम् ॥ १२ ॥

अनुयोगितायाः कालिकसम्बन्धावच्छिन्नाभावे कालिकसम्ब- न्धेन साध्ये महाकालत्वहेतावव्याप्तिवारणायाभावपदम्, अन्यथा निरुक्तविशेषणाक्रान्त–साध्यनिष्ठप्रतियोगिताया निरूपकं यदभाव- रूपानुयोगित्वं तत्रापि अनुयोगितात्वावच्छिन्नायाः साध्यीयप्रति- योगितायाः सत्त्वेन तदवच्छेदककालिकसम्बन्धेन महाकालस्यापि साध्याभावाधिकरणत्वात् ॥ १३ ॥

साध्याभावनिष्ठं यत्कालिकादिसम्बन्धावच्छिन्नं साध्यनिरू- पितवृत्तित्वं तदवच्छेदककालिकादिसम्बन्धेन साध्याभाववति पर्वतादौ हेतोः सत्त्वाद्वह्निमान् धूमादित्यादावव्याप्तिवारणायान्तिमं प्रतियोगितापदमिति ॥ १४ ॥

अथात्र कालिकसम्बन्धावच्छिन्ननिरूपकताकाधिकरणतायां निरवच्छिन्नत्वाभावेनाव्याप्तितादवस्थ्यमिति चेन्न । कालिकान्य- सम्बन्धावच्छिन्नत्वस्य किञ्चिदवच्छिन्नत्वस्य च द्वयोर्व्यतिरेकस्यैव निरवच्छिन्नपदेनापेक्षितत्वात् ॥ १५ ॥

नन्वत्र लक्षणे घटभिन्नं कपालत्वादित्यत्र गुणभिन्नं द्रव्यत्वा- दित्यत्र चाव्याप्तिर्घटत्वगुणत्वादिनिष्ठात्यन्ताभावत्वनिरूपितप्रति-

योगितावच्छेदकसमवायसम्बन्धेन घटगुणादिरूपसाध्याभावस्या-धिकरणे कपाले द्रव्ये च हेतोः सत्त्वादिति चेन्न यादृशसाध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदको यः संबन्धस्तत्सम्बन्धेन तादृशसाध्याभावाधिकरणनिरूपितवृत्तित्वसामान्याभावस्य विवक्षितत्वात् ॥ १६ ॥

उभयत्वमुभयत्रैवेति—

नन्वेवमपि द्रव्यं घटत्वपटत्वोभयस्मादित्यादावतिव्याप्तिः साध्याभाववति गुणादौ तदुभयोरवृत्तेस्तथा घटे घटत्वस्य पटे च पटत्वस्य साध्यसमानाधिकरणत्वात्। तथा च हेतुतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यमेव वाच्यमित्युभयत्वावच्छिन्नस्य कुत्राप्यवृत्त्या नातिव्याप्तिरिति वाच्यम्; तथा सति हेतुतावच्छेदकभेदेनानन्तकार्य्यकारणभावभेदापत्तेरिति चेन्न। तादृशसामानाधिकरण्यविशिष्टहेतुतैव व्याप्तिः वैशिष्ट्यञ्च स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वसामानाधिकरण्य स्वानवच्छेदकानच्छिन्नत्वचतुष्टयसम्बन्धेन स्ववृत्तित्वमपि स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन बोध्यमित्यदोषः ॥ १७ ॥

अन्येत्विति।

अथात्र तादृशहेत्वधिकरणनिरूपितनिरवच्छिन्नवृत्तितानवच्छेदकनिरुक्तसाध्याभावत्वकत्वमित्येवोच्यताम्। न। तथा सति द्रव्यत्वाभाववान् जातित्वादित्यादौ निरुक्तसम्बन्धावच्छिन्नहेत्वधिकरणवृत्तित्वाप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् ॥ १८ ॥

नन्वेवमपि घटत्वतद्घटाकाशसंयोगान्यतराभाववान् गगनत्वादित्यत्राव्याप्तिः साध्यवद्भिन्ने घटे वर्त्तमानस्य तत्संयोगात्मकसाध्याभावस्य गगनेऽपि सत्त्वादिति चेन्न यतस्तादृशान्यतराभावत्वावच्छिन्नाभावो न तादृशान्यतरस्वरूपः तथा सति तत्संयोगे स्वप्रतियोगिसमानाधिकरणत्वतदभावयोरध्यासात्, किन्तु

ततो भिन्नं घटे गगने च द्वयमेवेति न तत्राव्याप्तिरिति ॥ १९ ॥

प्रतियोग्यवृत्तित्वेनेति ।

न चैवं सर्वत्रासम्भवः भेदमात्रस्य प्रतियोगितावच्छेदकरूपप्रतियोगिवृत्तित्वादिति अन्योन्याभावत्वनिरूपितप्रतियोगित्वाश्रयावृत्तित्वनिवेशे तु लक्षणस्थान्योन्याभावपदवैयर्थ्यमभावनिवेशेनैवोपपत्तेरिति चेन्न । तल्लाभार्थमेव तस्योपादानादिति ॥ २० ॥

न चात्र प्रतियोग्यवृत्तित्वमपहाय साध्यवदवृत्तित्वमेवोच्यतां तथा च पञ्चलक्षणाभेदस्यापि वारयितुं शक्यत्वादिति वाच्यम्, अन्योन्याभावपदवैयर्थ्यापत्तेरिति ॥ २१ ॥

चतुर्थलक्षणे तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकं हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाभावत्वमिति ।

अत्र तद्वन्निष्ठत्वमभावस्य न सम्बन्धसामान्येन धूमाभावाभावस्यापि कालिकादिसम्बन्धेन साध्याभाववति वृत्त्या वन्हिमान् धूमादित्यादावव्याप्त्यापत्तेः। न वा हेतुतावच्छेदकसम्बंधेन सत्तावान् द्रव्यत्वादित्यादौ तादृशसम्बन्धेन साध्याभाववति वृत्तेरप्रसिद्धया अव्याप्त्यापत्तेः किन्तु स्वप्रतियोगितावच्छेदकसम्बन्धेन स्वप्रतियोगिमत्वबुद्धेर्विषयविधयाप्रतिवन्धकतावच्छेदको यः सम्बन्धस्तेनैव सम्बन्धेनेति तत्त्वम् ॥ २२ ॥

ननु तथापि संयोगसम्बन्धावच्छिन्नधूमाभावाभावात्मकस्य धूमस्य वन्ह्यभाववति धूमावयवे समवायेन वृत्त्या वन्हिमान् धूमादित्यत्राव्याप्तिरिति चेन्न ।तादृशसाध्याभावाधिकरणवृत्तितावच्छेदकानुयोगितानिरूपितप्रतियोगितानवच्छेदकं हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वस्य विवक्षितत्वात् । संयोगसम्बंधावच्छिन्नधूमाभावाभावत्वं तत्सम्बंधावच्छिन्नवृत्तिताया एवावच्छेदकं, न तु सम्बंधान्तरावच्छिन्नवृत्तिताया, धूमस्य तत्सम्बंधेनैव तदभावाभावत्वसिद्धेरिति ॥ २१ ॥

इति माथुर्याः क्रोडपत्रम् ।

# व्याप्तिपञ्चकजागदीश्याः क्रोडपत्रम् ।

स्वप्रतियोगितावच्छेदकसंबन्धेन साध्यवद्भिन्ने वर्तते यः समवायसंबन्धावच्छिन्नवन्ह्यभावस्तद्वति हेतोर्वृत्तितयाऽव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धात्रच्छिन्न प्रतियोगितालाभाय साध्यपदमिति जगदीशः ।

अत्रेयमाशङ्का एवं सति स्वप्रतियोगितावच्छेदकसंबन्धेन साध्यवद्भिन्नो यः साध्याभाववानिति कर्मधारयः कथं परित्यक्त इति चेत्, सप्तमीसमासपक्षे स्वप्रतियोगितावच्छेदकसंबन्धेन साध्यवद्भिन्ने यः साध्यताघटकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्तद्वदवृत्तित्वमेव वाच्यम् अन्यथा साध्यताघटकसंबन्धावच्छिन्नप्रतियोगिताकाभावमात्रनिवेशे घटभिन्नत्य तादात्म्येन साध्यत्वे पटत्वादिहेतौ द्रव्यत्वात्मकं द्रव्यभिन्नभेदमादायाव्याप्त्यापत्तेः । तद्भिन्नाभावस्यातिरिक्तत्वेपि तद्भिन्नभेदस्य तत्स्वरूपत्वोपगमात् । कर्मधारयपक्षे तु साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वनिवेशवैयर्थ्यमिति ध्येयम् । । १

जागदीश्यां ४३ पृष्ठे गगनावृत्तिधर्मवान् द्रव्यत्वादित्यादि । ननु साकल्यविशेषणे दत्तेऽपि गगनत्वसाध्योभयाभावमादायातिव्याप्तिरिति चेन्न । इदानीं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं प्रतियोगितायामस्तीत्यभिप्रायात् । अत्रेदं तत्त्वम् । साध्ये साकल्यविशेषणस्य वास्तवफलं यदव्याप्तिवारणं तदग्रे न संभवतीति प्राचामाशयः । विपक्षे साकल्येन वारयितुमशक्यस्यैव साध्ये साकल्यवास्तवफलत्वात् । नच गगनैतद्रूपोभयवान् न तद्रसादित्यादौ साध्याभाववति साकल्यविशेषणे दत्तेऽपि तत्र साध्यप्रतियोगिकस्य एतद्रूपाभावस्याधिकरणे हेतोरभावात् गगनैतद्रूपोभयत्वावच्छिन्नाभावस्य प्रतियोगतावच्छेदकावच्छिन्नाधिकरणप्रसिद्ध्या प्रतियोगिवैय-

धिकरणयस्यैव दौर्लभ्याच्च संभवन्त्यतिव्याप्तिः, साध्ये साकल्यदानं तादृशसकलसाध्यप्रतियोगिकाभावप्रसिद्ध्यैव वार्यत इति साध्ये साकल्यविशेषणस्य फलमपि वास्तवमतिव्याप्तिः प्रथमतः संभवतीति वाच्यम्। तत्र साध्ये साकल्यविशेषणासत्त्वेऽपि एतद्घटावृत्तित्वावच्छिन्नाभावं एतद्रूपगगनान्यतराभावं चादायातिव्याप्तिवारणसंभवेन तस्य वास्तवफलत्वाभावात् । २ ।

**दीधितिकारः ।** चतुर्थलक्षणे हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यं निवेश्य प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नं वक्ति स्म । तत्राशंक्यते अत्र हेतुतावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणाभावीयप्रतियोगित्वापेक्षया प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणाभावीयहेतुतावच्छेदकावच्छिन्नप्रतियोगित्वनिवेशनं यद्यपि गुरु । तथापि यथासंनिवेशे न वैयर्थ्यम्। वस्तुतः साध्याभाववत्सकलनिष्ठहेतुतावच्छेदकावच्छिन्नस्वप्रतियोग्यनधिकरणताकाभावप्रतियोगित्वापेक्षया हेतुतावच्छेदकावच्छिन्नयादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं साध्याभाववतस्तद्वत्त्वं न गौरवग्रस्तमिति ॥ ३ ॥

जागदीश्यां ४१ पृष्ठे–तत्तत्सपक्षावृत्तित्वावच्छिन्नाभवेति ।

नच साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य लक्षणे निवेशनीयतया तद्भदावृत्तिर्नास्तीत्याद्यभावमादाय कथम व्याप्तिरिति वाच्यम्। अभावद्वये प्रतियोगिवैयधिकरण्यावच्छिन्नत्वस्यावश्यं निवेशनीयतया समवायादिसंबन्धावच्छिन्नप्रतियोगिताकाभावमादाय दोषाभावादेतल्लक्षणे तस्यानिवेशनीयत्वादन्यथा धूमवान्वन्हेरित्यादौ संयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य गुणादावेव सत्त्वादप्रसिद्ध्यभिधानस्योन्मत्तप्रलपित्वापत्तेः ॥४॥

अथ प्रागुक्तयुक्त्याऽसंभवेऽव्याप्त्यभिधानमसंगतं, न च तद्घटभिन्नं पटत्वादित्यादावेव लक्षणगमनसंभव इति वाच्यम्। तत्रापि घटभेदत्वावच्छिन्नभेदत्वावच्छिन्नाभावरूपसाध्याभावस्तोमस्याधिकरणाप्रसिद्धेर्दुर्वारत्वात् । न च भेदत्वावच्छिन्नाभावस्य प्रतियोगित्वं घटादिभेदे स्वीक्रियते न तु तस्य प्रतियोगित्वं साध्येऽपीति वाच्यम्। तावत्पर्यन्तानुधावने धूमवान्वन्हेरित्यादौ

घटावृत्तित्वावच्छिन्नाभावस्य प्रतियोगित्वं घटादिभेदे स्वीक्रियते न तु प्रतियोगित्वं धूमादावप्यतः साध्याभावे साकल्येऽपि दोषो नास्तीति चेन्मैवम् पटावृत्तिधर्मवान् घटत्वादित्यादौ लक्षणस्यान्वयसंभवान्नासंभव इति। न च तत्रापि पटभेदत्वावच्छिन्नाभावस्य तत्तत्पटावृत्तिधर्माभावस्य च साध्याभावस्तोमस्याधिकरणाप्रसिद्ध्यैवाव्याप्तिसंभव इति वाच्यम्। तादृशाभावस्य यावत्साध्यप्रतियोगिकत्वविरहेण साध्याभावे यावत्साध्यप्रतियोगिकत्वविवक्षया तद्वारणात् (५)।

चतुर्थलक्षणे निर्धूमत्वव्याप्येति।

ननु निर्धूमत्वव्याप्याभाववति पर्वतमहानसादौ वन्ह्यभावाभावस्य वन्हिस्वरूपस्य यावद्विपक्षावृत्तित्वेपि वन्ह्यभावभेदस्य यावद्विपक्षवृत्तित्वसंभवान्नाव्याप्तिः न चात्यंताभाव एव सकलसाध्याभाववन्निष्ठो निवेश्यः तदनिवेशे धूमवान् वन्हेरित्यादावतिव्याप्तिरयोगोलके वन्हिभेदासत्त्वादिति वाच्यम्। धूमाभाववति वन्ह्यादौ वन्हिभेदासत्त्वेनातिव्याप्तेरनवकाशादितिचेत्। वन्ह्यभावान्यत्वविशिष्टनिर्धूमत्वव्याप्यवान् वन्ह्यभावान्यत्वविशिष्टनिर्वन्हित्वादित्यादावव्याप्तिस्तत्र साध्याभाववति वन्ह्यभावे वन्ह्यभावभेदात्मकहेतुभेदस्यासत्त्वात् पर्वतादौ च वन्ह्यात्मकहेत्वभावस्य यावद्विपक्षावृत्तित्वादिति (६)

जागदीश्यां ५२ पृष्ठे—निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्नेत्यादि।

नन्वत्र कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिवारणाय साध्याभावे प्रतियोगिवैयधिकरण्यस्य सार्थक्येऽपि हेत्वभावे प्रतियोगिवैयधिकरण्यमनर्थकमेव न चैतद्वृक्षत्ववान् कपिसंयोगादित्यादावतिव्याप्तिवारणाय तदिति वाच्यम्। तत्र साध्याभाववति जलादौ कपिसंयोगाभावस्यासत्त्वेपि तदवच्छिन्नाभावस्यापि तत्रासत्वात्तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपसाध्याभावव्यापकत्वस्य हेत्वभावेऽभावादितिचेन्न। द्रव्यं विशिष्टसत्त्वादित्यावव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यस्य व्यापकताशरीरे निवेशनीयत्वात् अन्यथा द्रव्यत्वाभाववति गुणादौ विशिष्टसत्त्वाभावत्वावच्छिन्नाभावस्य सत्तास्वरूपतया तस्य तत्र सत्त्वेन विशिष्टसत्ताभावत्वस्य व्याप

कतावच्छेदकत्वविरहादव्याप्तिः । अधुना तु प्रतियोगिवैयधिकरण्या वच्छिन्नाभावस्य व्यापकताशरीरे निवेशनीयतया गुणादौ विशिष्ट-सत्त्वाभावस्याभावसत्त्वेऽपि तादृशाभावप्रतियोगिनो विशिष्टसत्त्वा भावस्यापि सत्त्वेन तद्दोषवारणेऽपि वृक्षत्ववान् कपिसंयोगादित्या दावतिव्याप्तिदुर्वारैवेति तद्वारणाय हेत्वभावे प्रतियोगिवैयधिकर-ण्यावच्छिन्नत्वविशेषणमवश्यं निवेशनीयमिति ध्येयम् । वस्तुतः साध्याभाववन्निष्ठाधिकरणतानिरूपकतावच्छेदकानुयोगितानिरूपि तप्रतियोगितायाः अवच्छेदकत्वाभावस्य तादृशाभावत्वे निवेशनीय तयैव द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिवारणसंभवे व्यापक-ताशरीरे प्रतियोगिवैयधिकरण्यमनादेयमिति ध्येयम् ( ७ )

इति जागदीश्याः क्रोडपत्रम् ।

# सिंहव्याघ्रलक्षण-जागदीश्याः क्रोडपत्रम् ।

साध्यासामानाधिकरण्यस्य तृतीयपरिष्कारं परित्यज्य चतुर्थ परिष्कारानुसरणे विषमव्याप्ते हेतावव्याप्ति गौरवञ्च बीजत्वे-नोक्तं जगदीशेन ।

ननु साध्यसामान्यनिष्ठाभावेत्यादिकल्पे साध्यतावच्छेदक-संबन्धावच्छिन्नाधेयतानिवेशस्यावश्यकत्वम् अन्यथा समवायसंब-न्धावच्छिन्नपर्वतवृत्तिः तथा च द्रव्यवान् धूमादित्यादावव्याप्तिः साध्यसामान्यनिष्ठाभावप्रतियोगिसाध्यतावच्छेदकसंबन्धावच्छि-न्नाधेयत्वाप्रसिद्धेः सत्त्वात् । अत्र केचित् । साध्यसामान्य निष्ठाभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्नाधेयत्वसंबन्धाव-च्छिन्नप्रतियोगिताश्रयनिरूपितवृत्तित्वस्यानधिकरणत्वमेव निष्कृष्टद-लार्थः । तथा च पर्वतादौ वन्हिनिष्ठाभाव प्रतियोगित्वाभावान्नाव्याप्ति रित्याहुः अत्र यद्यप्येतादृशसंबन्धस्य वृत्त्यनियामकतया तत्संबन्धा-वच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽसंभवापत्तिः तथापि साध्यतावच्छे-दकसंबन्धावच्छिन्नत्वसाध्यनिष्ठत्वोभयाभाववत्त्वस्याधेयतायां नि-वेशेन पूर्वोक्तदोषानवकाश इति ॥ १ ॥

अथात्र आर्द्रेन्धनप्रभववन्हिमान्धूमादित्यादिसमव्याप्तहेताव-प्यव्याप्तिः संभवति महानसीयवन्ह्यात्मकार्द्रेन्धनप्रभववन्हौ वर्तमानो यः पर्वतवृत्तित्वाभावस्तत्प्रतियोगि यत्पर्वतवृत्तित्वं

तन्निरूपकाधिकरणवृत्तित्वस्य पर्वतीयधूमे सत्त्वादिति चेन्न । व्यधिकरणद्वयवृत्तिसाध्यतावच्छेदकक वह्न्य विषमव्याप्तिपदेन विवक्षितत्वान्नानुपपत्तिरिति ध्येयम् ॥ २ ॥

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वानधिकरणत्वमित्यत्र साध्यनिष्ठत्वं साध्यतावच्छेदकसम्बन्धावच्छिन्नं बोध्यं अन्यथा समवायेन रूपवान् महाकालत्वादित्यादौ व्यभिचारिण्यतिव्याप्तिरितिजगदीशः ॥

यद्यपि कालिकसंबन्धावच्छिन्नरूपनिष्ठाधेयतानिरूपकाधिकरणत्वस्यैव महाप्रलये सत्त्वात् संबन्धसामान्येन रूपनिष्ठाधेयत्वानिरूपकाधिकरणत्वं न महाप्रलये किं तु गगन एव तन्निरूपितवृत्तित्वानधिकरणत्वं च कालत्वहेतावपि तथा च तत्रैवातिव्याप्तिसंभवे महाकालत्वपर्यन्तानुधावनं व्यर्थम् तथापि यादृशव्यभिचारिमात्र एवाधेयतायां साध्यतावच्छेदक संबन्धानिवेशेऽतिव्याप्तिस्तादृशहेतुः महाकालत्वमेव न तु केवलं कालत्वम् । तथा हि । जन्यरूपवान् कालत्वादित्यादौ जन्यभावानधिकरणमहाप्रलये कालिकसंबन्धावच्छिन्ना या जन्यरूपादिनिष्ठाधेयता तदनिरूपकाधिकरणत्वस्य सत्त्वात् तादृशप्रलयनिरूपितवृत्तित्वस्य कालत्वे सत्त्वात् महाकालत्वानुधावनम् । तथा च महाकाले वृत्तिमन्मात्रस्यैव कालिकसंबन्धेन वृत्तिमन्मात्रस्यैव कालिकसंबन्धेन वृत्तित्वात् न कालिकसंबन्धावच्छिन्नकिञ्चिन्निष्ठाधेयताया अनिरूपकाधिकरणत्वं महाकालेऽस्तीति ॥ ३ ॥

अस्माकं तु तादृशसम्बंधेन यद्धेतुसंबन्धित्वं तस्य स्वरूपसंबन्धावच्छिन्नाभावमादाय लक्षणसमन्वयसंभवादिति जगदीशः॥

अत्रेयमाशंका हेतुतावच्छेदकसंबन्धावच्छिन्नयद्धर्मावच्छिन्नाभावत्वेन व्यापकतानिवेशे साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकं हेतुतावच्छेदकसंबन्धावच्छिन्नयद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वं व्याप्तिरिति पर्यवस्यति तत्र साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमवश्यं हेतुतावच्छेदकसंबन्धेन वक्तव्यम् अन्यथा वन्हिमान् धूमादित्यादौ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणीभूतो यो धूमावयवस्तत्र

धूमाभावस्य समवायेन वर्तमानत्वात्तत्प्रतियोगितावच्छेदकं धू-
माभावत्वमित्यव्याप्तेः । एवं च सत्तावान् जातेरित्यादौ
साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे सामान्यादौ हेतुतावच्छेदक
संबन्धेन वृत्तित्वाप्रसिद्ध्याऽव्याप्तिः एवं च यादृशस्थलेऽव्याप्त्या
पूर्वोक्तलक्षणं परित्यज्य एतादृशलक्षणं कृतं तादृशस्थल एवा-
व्याप्तिः सम्भवतीति तामुपेक्ष्य कथं चैत्रत्ववान् तद्धनादित्यादि-
स्थलांतरानुधावनं कृतम् एवं द्रव्यं विशिष्टसत्त्वादित्यत्र साध्य-
निष्ठाधेयत्वानिरूपकाधिकरणे गुणे सत्तास्वरूपविशिष्टसत्ताभावा-
भावो वर्तते तत्प्रतियोगितावच्छेदकं विशिष्टसत्त्वाभावत्वमिति
तत्राप्यव्याप्तिपरिहार एतादृशविवक्षायां न संभवतीति चेत् ।
अत्राहुः साध्यनिष्ठाधेयत्वानिरूपकाधिकरण व्यापकतावच्छेदक-
त्वमत्र साध्यनिष्ठाधेयत्वानिरूपकाधिकरणीभूतयत्किंचिद्व्यक्तिवृत्त्य-
धिकरणतानवच्छेदकं यत्तद्भिन्नत्वरूपं निवेशनीयम् ॥ ४ ॥

साध्यानधिकरणेत्यादौ नञ्व्यत्ययेन चरमाधिकरणत्वेन सहा-
न्वयाल्लाभालाभ इति जगदीशः ।

ननु साध्यानधिकरणानधिकरणत्वशब्देन साध्यं यदधिकर-
णानधिकरणं तत्राभावस्यावोधनादसङ्गतिरिति चेत् नव्यमते
वहुव्रीहिस्थले विग्रहवाक्येन यादृशार्थः प्रत्याय्यते तत्पदार्थ वैपरी-
त्येनान्वयावगाहिबोधः समासेन जन्यते इति व्युत्पत्तेरधिकरण-
मनधिकरणमाधेयतानिरूपकं यस्य साध्यस्येति प्रथमं बहुव्रीहिः
ततोऽधिकरणानधिकरणं यस्य इति तदुत्तरं भावप्रत्ययाच्च नञ्त-
त्पुरुषः । नञः साध्यपदोत्तरं निपातः भट्टाचार्येण नञः साध्यनिपा-
तस्य चापि नयेन व्युत्पत्त्यविरोधात् तत्प्रथमबहुव्रीहिवाक्येन यत्प-
दार्थे साध्यनिष्ठाधेयत्वनिरूपकत्वावच्छिन्नप्रतियोगिताकभेदवदधि-
करणमिति बोधः। समासेन तु अधिकरणनिष्ठाभावप्रतियोगितावच्छे-
दकीभूतनिरूपकताकाधेयतावत्साध्यमिति बोधो जयते द्वितीय-
बहुव्रीहिवाक्येन तु यत्पदोत्तरषष्ठ्यर्थस्य वृत्तितानिरूपकत्वस्याधि-
करणांशेवगाहिनोक्तप्रकार एव बोधः द्वितीयबहुव्रीहिणा तु पुन-
स्तत्पदार्थे नञ्व्यत्ययेन साध्यनिष्ठाधेयत्वनिरूपकत्वावच्छिन्नप्रति-
योगिताकभेदवदधिकरणनिरूपितत्वं यत्पदार्थे बोध्यते भावप्रत्ययेन

तादृशवृतित्वमात्रं नञ्तत्पुरुषेण तदभाव इति रीत्या चरमाधिकरणांशथिनिर्मुक्तस्य साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वाभावरूपस्य प्रथमलक्षणार्थस्यावगतेः । द्वितीयलक्षणार्थावगतिस्तु एवं रीत्या । साध्यस्यानधिकरणं साध्यानधिकरणं साध्यवद्भिन्नमिति यावत् तदेवाधिकरणमाधेयतानिरूपकं यस्येति वाक्येन यन्निष्ठाधेयतानिरूपकं साध्यवद्भिन्नमिति बोधः समासेन तु साध्यवद्भिन्ननिरूपितवृत्तित्वं यत्पदार्थे बोध्यते इति प्राचां समाधानम् ।५।

अत्र केचिदाक्षिपन्ति हेतुतावच्छेदकसंबन्धावच्छिन्नहेत्वधिकरणावच्छेद्यसाध्योपलक्षितनिरूपितवृत्तित्वाभावस्यैव लक्षणे निवेशः। अन्यथा वन्हिप्रागभावे वन्हिविशिष्टनिरूपितवृत्तित्वाभावस्य सत्त्वात् वन्हिमान् वन्हिप्रागभावादित्यादावव्याप्तिस्स्यात् तथा च कथं हेत्वधिकरणनिष्ठावच्छेदकतायां निरवच्छिन्नत्वं निवेशितमिति । तन्न । साध्योपलक्षितनिरूपितवृत्तित्वाभावस्य निवेशेऽपि वन्हिमान् वन्हिप्रागभावादित्यादावव्याप्तिवारणार्थं हेत्वधिकरणनिष्ठावच्छेदकतायां निरवच्छिन्नत्वं देयम् । अन्यथा वन्ह्यधिकरणकालावच्छेदेन वन्ह्युपलक्षितनिरूपितवृत्तित्वभावसत्त्वादव्याप्तिरिति ध्येयम् ॥ ६ ॥

इति न्या० आ० पं० शुक्लोपनामक पं० श्री गिरीशशर्म्मणा संकलितं क्रोडपत्रं समाप्तम् ।





| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| भाव | भावत्व | २७ | ८ |
| कत्व | कत्वे | २८ | २१ |
| अशुद्धम् | शुद्धम् | पृ | पं |
| घटत्वएव | घटएव | २९ | ४ |
| साध्याभावाभावाव | साध्याभावत्वाव | २९ | ९ |
| त्वादित्यादित्य | त्वादित्य | २९ | २० |
| भावाद्य | भावत्वाद्य | ३० | २० |
| स्वानि | स्वनि | ३१ | १९ |
| नच्छिन्न | वच्छिन्न | ३२ | २ |
| अधिकरणतानिष्ठाधिकरणता-निष्ठाधिकरण | अधिकरणतानिष्ठा | | |
| तानिरूपितानिरू | धिकरणतानिरू | ३२ | २९ |
| ता | त्वा | ३२ | २९ |
| त्रा | त्राति | ३३ | २५ |
| त्वेपि | त्वेप्य | ३८ | ३१ |
| नच | नचा | ३९ | ४ |



॥ श्रीः ॥

# व्याप्तिपञ्चकविवृतिः ।

॥ श्रीगणेशाय नमः ॥

व्याजस्वीकृतसेवया विधुरभूदग्रेसरः श्रीमता-
म्मानव्याहतिकैतवावनमनादीशस्त्रिलोकीपतिः ।
सम्भिन्नाब्जकुलप्रसूतिविभवादम्भोजमञ्जालयो
यस्य श्रीगिरिजापदाम्बुजयुगन्तत्स्यादभीष्टप्रदम् ॥ १ ॥
जगदीशकृतव्याप्तिग्रन्थव्याख्यावलम्बिनी ।
विवृतिर्धर्म्मदत्तेन मैथिलेन वितन्यते ॥ २ ॥

*दीधितौ समारब्धेति* समीचीनभूतकालिकारम्भविषयेत्यर्थः। आरम्भश्चाद्यकृतिः, प्रकृते कृतावाद्यत्वञ्च तत्कृतिसमवायिसमवेतप्रामाण्यपरीक्षागोचरकृतिक्षणध्वंसानधिकरणक्षणवृत्तित्वम्।समवेतान्तनिवेशादन्यपुरुषकृतपरीक्षायाः पूर्ववृत्तत्वेऽपि न क्षतिः। आरब्धत्वकथनेन प्रामाण्यपरीक्षाया वृत्तत्वनिरासेन तदुपयोगिव्याप्तिग्रहोपायप्रतिपादनादेर्वैफल्यशङ्का निरस्ता। समीचीनत्वञ्चेष्टसाधनत्वादिप्रमाजन्यत्वं तेन कृतेः संवादित्वलाभेन तद्विषयपरीक्षा तत्कारणव्याप्तिग्रहोपायप्रतिपादन तत्साधनव्याप्तिस्वरूपनिरूपणानां फलवत्वलाभेनोपादेयत्वव्यक्तिः। *अनुमानप्रामाण्यपरीक्षेति*। परमतनिराकरणपूर्वकस्वमतव्यवस्थापनम्परीक्षा। परमतं परकीयमतिविषयः अनुमानप्रामाण्याभावः तन्निराकरणं तज्ज्ञानेऽप्रामाण्यज्ञापनं यद्वा परमतं परमतिः सा च नानुमानं प्रमाणमित्याकारिका तन्निराकरणं तत्राप्रामाण्यज्ञापनं तच्चासिद्ध्याद्युद्भावनं तत्पूर्वकं तदुत्तरकालिकं स्वमतमनुमानप्रामाण्यं तद्व्यवस्थापनमप्रामाण्यज्ञानानास्कन्दिततद्गोचरज्ञानानुकूलव्यापारः। अनुमानाप्रामाण्यज्ञानेऽसत्यप्रामाण्यज्ञाने, अनुमानप्रामाण्यग्रहोत्पत्तेरसम्भवेन व्यापारस्य न ज्ञानजनकत्वसम्भव इति भवति तस्य परमतनिराकरणपूर्वकत्वम्, अनुमानप्रामाण्यप्र-

तिपादकग्रन्थस्य परीक्षात्वोक्त्या केवलस्वमतप्रतिपादकत्वनिराकरणादशेषजिज्ञास्वध्ययनयोग्यतालाभेन व्याप्तिस्वरूपनिरूपणस्यापि तल्लाभः ॥ *कारणीभूतेति* ॥ यत्रानवस्थादुस्थतर्कानिवर्त्यव्यभिचारशङ्कावरुद्धोत्पत्तिकव्याप्तिग्रहासत्त्वानिबन्धनानुमितिरूपफलानुत्पत्त्याऽप्रामाण्यमनुमानस्य मन्यन्ते परे चार्वाकादयस्तत्र नानभिधाय व्याप्तिग्रहोपायं प्रामाण्यमनुमानस्य व्यवस्थापयितुं शक्यमिति व्याप्तिग्रहोपायप्रतिपादनस्य भवति परीक्षाकारणत्वमिति भावः । व्याप्तिस्वरूपनिरूपणस्य परीक्षाकारणत्वेऽपि व्याप्तिग्रहोपायप्रतिपादनस्यापि तादृशतया व्याप्तिग्रहोपायश्च वक्ष्यत इत्यनेन तत्प्रतीक्षाविधानमनुचितमित्याशङ्कानिरासाय व्याप्तिस्वरूपमविद्वांसंप्रति व्याप्तिग्रहोपायप्रतिपादनस्याशक्यतया तत्प्रथमं स्वरूपाभिधानबीजभूतन्तदुपजीव्यत्वं दर्शयितुं परीक्षाकारणव्याप्तिग्रहोपायकारणत्वेन स्वरूपनिरूपणं दर्शितं प्रतिपादननिदानमित्यनेन । यद्यप्युक्तशङ्कानिवृत्तिः कारणान्तावचनेपि भवत्येव तथाप्यनुमानप्रामाण्यनिरूपणानन्तरूपितोपोद्घातसङ्गतिलाभाय तदुक्तिः । व्याप्तिस्वरूपगोचरपूर्वपक्षस्यैव प्रथममभिहितत्वेन व्याप्तिस्वरूपनिरूपणस्याक्रियमाणत्वेऽपि तदनुकूलगोचरकृतेर्विद्यमानतयाऽऽरभ्यमाणत्वन्तत्रास्त्येवेति कुरुत इत्यनुक्त्वारभत इत्युक्तमिति । नन्वित्यादिनेति मूले *नन्वित्यादि* नन्विति प्रश्नः, अनुमितेरितरभेदानुमितेः, कारणं यद्व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानजन्यज्ञानत्वरूपहेतुस्तद्घटकव्याप्तिज्ञानस्य विषयकेत्यर्थः । यद्वा अनुमितिकारणपरामर्शविषयव्याप्तिःकेत्यर्थः । एतेन घटकत्वार्थकसप्तम्या समासस्य क्वाचित्कत्वेऽपि कर्मधारयेनार्थलाभे गुरुतरसमासान्तराश्रयणस्यायुक्तत्वेऽपि च न क्षतिः, उक्तार्थस्य कर्मधारयलभ्यत्वात् । अत्र का व्याप्तिरित्यभिधानेऽनुमानप्रामाण्योपपादकत्वलक्षणोपोद्घातसङ्गत्यलाभाज्ज्ञान इत्यन्तमनुमित्युपपादिका व्याप्तिः केत्याभिधाने कथमनुमित्युपपादिकेत्याकाङ्क्षानिवर्तकस्य वक्तव्यतापत्त्यानुमितिहेतुव्याप्तिज्ञान इति । नचैवमनुमितिहेतुज्ञान इत्येववक्तव्यमनर्था पुनरुक्तिरिति वाच्यम् । अनुमित्यनुपपादकस्याप्यनुमितिहेतुसमूहालम्बनज्ञानविषयत्वसम्भवेनानुमित्युपपादकत्वाप्राप्तेः तदुक्तौ च व्याप्तिविशिष्टज्ञानेऽनुमितिजनकत्वान्वये विशेष्यतावच्छेदके सति बाधके विशेषणप्रयोजकत्वनियमेनोक्तावच्छेदकत्वात्मकप्रयोज-

कत्वस्य लाभेन जनकतावच्छेदके तत्र सर्वजनसिद्धप्रयोजकत्वस्य लाभसम्भवादिति । *व्याप्तिः* । व्याप्तिपदार्थः, तेन व्याप्तेरनुमिति-जनकतावच्छेदकरूपत्वेपि ज्ञान इत्यन्तस्य न वैयर्थ्यम्, सप्तम्या विषयत्वमर्थः, किमो जिज्ञासा, साच व्याप्तिपदार्थतावच्छेदकावच्छिन्नज्ञानं जायतामित्याकारिका ॥ *नतावदव्यभिचरितत्वमिति* व्याप्तिरित्यनुषञ्जनीयम् । अनुमितिजनकतावच्छेदकमिति तदर्थः, अव्यभिचरितत्वमव्यभिचरितत्वपदार्थः । तेन साध्याभाववदवृत्तित्वादिसाधारणस्याव्यभिचारितत्वत्वस्यैकस्याभावेपि न क्षतिः । अथात्राव्यभिचारपदार्थो नानुमितिजनकतावच्छेदकः साध्याभाववदवृत्तित्वादिभेदवत्त्वादिति प्रयोगः, तन्न सम्भवति प्रत्येकभेदस्य हेतुत्वेऽवच्छेदकावच्छेदेन साध्यत्वे भागासिद्धिः । सामानाधिकरण्येन साध्यत्वेऽअव्यभिचरितत्वपदार्थमात्रेऽभिमतस्य व्याप्तित्वाभावस्यासिद्धेः, साध्यवद्भिन्नावृत्तित्वाद्यंशे जायमानव्यभिचारशङ्काया अनिवृत्तेश्च, मिलितस्य हेतुत्वे स्वरूपासिद्धेरिति चेन्न । अनुमितिजनकत्वं पक्षीकृत्य साध्याभाववदवृत्तित्वादिविषयत्वावच्छिन्नत्वाभावकूटहेतुनाऽव्यभिचारपदार्थविषयकत्वानवच्छिन्नत्वस्यैव साध्यत्वात् । नचानुमितिजनकतात्वावच्छेदेन साध्यता सामानाधिकरण्येन वा । नाद्यः । वह्न्यभाववदवृत्तिधूमादिहेतुकस्थले परामर्शनिष्ठहेतुत्वस्य साध्याभाववदवृत्तित्वविषयत्वावच्छिन्नत्वेन बाधभागासिद्ध्योः प्रसङ्गात् । न द्वितीयः । विवक्षितार्थासिद्धेः सर्वतज्जनकतास्वेव तस्य साधनीयत्वादिति वाच्यं प्रकृतपक्षतावच्छेदकतापर्य्याप्त्यधिकरणधर्मपर्य्याप्तावच्छेदकताकविशेष्यतानिरूपितविषयत्वाभिन्नप्रकृतहेतुतावच्छेदकपर्य्याप्तावच्छेदकताकविशेष्यतानिरूपिताव्यभिचारपदार्थतावच्छेदकतासमानाधिकरणावच्छेदकताकविषयत्वानवच्छिन्नत्वस्य साध्यत्वात्तादृशहेतुविषयत्वानिरूपितसाध्याभाववदवृत्तित्वत्वाद्यवच्छिन्नविषयत्वावच्छिन्नत्वाभावकूटस्य हेतुत्वाच्च पक्षतावच्छेदकतापर्याप्तिनिवेशाच्च वह्न्यभाववदवृत्तिधूमवत्पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिजनकत्वेन भागासिद्धिः । अनुमितिजनकता च प्रकृतहेतुतावच्छेदकावच्छिन्नलिङ्गकप्रकृतसाध्यतावच्छेदकावच्छिन्नविधेयकप्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकानुमितिजनकतारूपाग्राह्या । नातः प्रागुक्तानुमितिजनकतायां केवलपर्वतत्वादिरूपपक्षतावच्छेद-

क्रमादाय भागासिद्धितादवस्थ्यम् । नचैवमपि धूमव्यापकवह्निसामाना-
धिकरण्यवह्न्यभाववदवृत्तित्वोभयवद्धूमवान्पर्वत इति ज्ञानीयतादृश-
सामानाधिकरण्यत्वावच्छिन्नसाध्याभाववदवृत्तित्वत्वावच्छिन्नविषय-
ताया जनकतावच्छेदकत्वेन भागासिद्धितादवस्थ्यं साध्याभाववद-
वृत्तित्वत्वातिरिक्तधर्मानवच्छिन्नविषयत्वानवच्छिन्नत्वन्तूभयवत्ताज्ञा-
नीयतद्धर्मावच्छिन्नविषयताया जनकतानवच्छेदकत्वासिद्ध्या विव-
क्षितुमशक्यमितिवाच्यम् । प्रागुक्तविषयतात्वावच्छिन्नावच्छेदकतानि-
रूपि तत्वाभावस्यैव हेतुसाध्यविधयाप्रवेशात् । उक्तज्ञानीयविषयताया
अपितादृशसामानाधिकरण्यत्वावच्छिन्नविषयतात्वेनैवावच्छेदकत्वात् ।
अथ परमते वह्निव्याप्यो धूमो धूमवान् पर्वत इतिज्ञानस्यापि कारणत्वेन
विशिष्टविषयतायाः कारणतानवच्छेदकतया साध्याभाववदवृत्तित्व-
विषयताया जनकतावच्छेदकत्वेपि साध्यसिद्धिरिति न विवक्षितार्थ-
सिद्धिरिति चेन्मैवम् । प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठाव-
च्छेदकतानिरूपितप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदक-
ताविशिष्टहेतुतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकतानिरूपिता-
व्यभिचारपदार्थतावच्छेदकावच्छिन्नविषयतात्वावच्छिन्नावच्छेदकता-
निरूपितत्वाभावस्यैव साध्यत्वात् स्वनिरूपकजनकतानिरूपितत्वस-
म्बन्धेन वैशिष्ट्यं बोध्यम् । एवञ्च परमते निश्चयविशिष्टनिश्चयत्वेन ज-
नकत्वेपि परामर्षस्य न दोषः । एवं सति तद्भिन्नेत्यादिहेतुवाक्यस्यापि
साध्याभाववदवृत्तित्वत्वावच्छिन्नविषयतानवच्छिन्नानुमितिजनकत्वे-
त्यत्रैवतात्पर्यं व्याप्तिपदानुषङ्गं विनोक्तवाक्यस्य वाधितार्थकत्वेन
व्याप्तिपदानुषङ्गेण तदनुमितिजनकतावच्छेदकत्वेनाभिमताव्यभिचरि-
तत्वं, साध्याभाववदवृत्तित्वादिरूपा न व्याप्तिरितित्यर्थकरणे साध्या-
भाववदवृत्तित्वस्यानुमितिजनकतावच्छेदकत्वव्यतिरेकप्रतीतेः । *केव-
लान्वयिन्यभावादिति* । केवलान्वयित्वग्रहेऽनुमितिजनकज्ञाने विषयि-
तायाः परस्परोपश्लिष्टसाध्याभाववदवृत्तित्वनिरूपिताया अभावात्प्र-
तिबन्धकसत्त्वादित्यर्थः । तथाच तदानीमनुमित्युपपादकव्याप्तिज्ञान-
स्यैव सर्वत्र हेतुत्वसम्भवेन साध्याभाववदवृत्तित्वादिज्ञानस्यानुमिति-
जनकतायां मानाभाव इति भावः । ईदृशव्याख्यानक्लेशश्च प्रश्नवाक्यो-
द्देश्यस्योत्तरवाक्ये विधेयत्वनियमावष्टम्भेन तदनङ्गीकारे व्याप्तिरनुमि-
तिजनकतावच्छेदको नाव्यभिचरितत्वपदार्थः, साध्याभाववदवृत्ति-

त्वादिभेदकूटवत्वादित्यर्थे बाधासिद्ध्याद्यभावात्, वस्तुतः पक्षतावच्छेदकस्य हेतुव्यापकसाध्यसामानाधिकरण्य एव सत्वात्, तन्मात्रस्य तत्त्वेनानिश्चयाच्च न सिद्धसाधनम्, अत्रापि पक्षे तद्धीत्यादेर्व्याप्तिदानुषङ्गेण तत्साध्याभाववदवृत्तित्वञ्च व्याप्तिरित्यर्थ एव ज्यायान्। तदा सम्बन्धात्साध्याभाववदवृत्तित्वादेरव्यभिचरितत्वविशेषत्वलाभेन प्रकृतानुमानस्य विशेषाभावकूटहेतुकसामान्याभावसाध्यकत्वप्राप्त्याऽप्रयोजकत्वव्युदासात्, अव्यभिचरितत्वं न साध्याभाववदवृत्तित्वादिस्वरूपमित्यर्थस्त्वव्यभिचरितत्वमित्यनन्तरमनुमितिजनकतावच्छेदकत्वेनाभिमतमित्यस्य पूरणेन क्लेशेन समर्थनीयः। अन्यथा अव्यभिचरितत्वे साध्याभाववदवृत्तित्वादिरूपतायाः सिद्धान्तेऽपि सत्त्वेन तद्भिन्नत्वस्य प्रतिपत्यसम्भवेनासङ्गत्यापत्तेः, पूरणे तु केवलान्वयिन्यभावात्साध्याभाववदवृत्तित्वादेरनुमितिजनकतानवच्छेदकतया तादृशस्य तस्य भेदोऽनुमितिजनकतावच्छेदकत्वेनाभिमते सुग्रहः। तथाचाव्यभिचरितत्वस्य साध्याभाववदवृत्तित्वाद्यतिरिक्तविधाया अभावेन तेषां भेदस्यानुमितिजनकतावच्छेदके पर्यवसितत्वेऽव्यभिचरितत्वभेदः सिद्ध्यतीतिभावः। केवलान्वयिन्यभावादितितूक्तार्थकमेव। तेन न साध्याभाववदवृत्तित्वसिद्ध्यासिद्धिभ्यांव्याघात इति दिक् ॥०॥

*साध्याभाववदवृत्तित्वमिति*। अत्र वृत्तस्याभावोऽवृत्तं साध्याभाववतोऽवृत्तं साध्याभाववदवृत्तं तदस्यास्तीति साध्याभाववदवृत्ति तस्य भावः साध्याभाववदवृत्तित्वमिति। वृत्तं वृत्ति वृत्तेरभावोऽवृत्ति साध्यभाववतोऽवृत्ति यत्र स साध्याभाववदवृत्तिस्तस्य भावस्तत्त्वमिति वा विग्रहं वर्णयन्ति केचित्तन्नचारु न कर्मधारायान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रत्तिपत्तिकर इत्युशासनविरोधात्। तदर्थश्च बहुव्रीहीतरसमासान्मत्वर्थीयो न भवति बहुव्रीहिसमासेन मत्वर्थीयार्थलाभे अगुणवत्त्वमित्यत्र गुणस्याभावोऽगुणन्तदस्यास्तीत्यगुणवानिति विग्रहनिराकरणेन न गुणवानगुणवानिति विग्रहस्य गुणप्रकाशरहस्यादौ दर्शनेन कर्मधारयपदस्य बहुव्रीहीतरपरत्वात् नच बहुव्रीहीतरत्वं समासत्वञ्च व्यर्थं बहुव्रीहेरन्यपदार्थप्रधानतया तदुत्तरमत्वर्थीयार्थस्य तावत्पदबहुव्रीहिणा बोधयितुमशक्यत्वात्। कृदन्ततद्धितान्तादिपदोत्तरमत्वर्थीयार्थस्य तादृशपदबहुव्रीहिसमासस्यैवासम्भवेन बोधयितुमशक्यत्वाच्चेति वाच्यम्। उद्देश्यांशे उपरञ्जक-

स्थापि विशेषणत्वेन स्वरूपबोधनार्थत्वात् । नच न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तत्रसम्भवतीत्येव वाच्यमिति वाच्यम् । राजपुरुषवानित्यत्र राजपुरुषोयत्रेतिबहुव्रीहेस्सम्भवात् नचैवमपि यत्रराजाराजसम्बन्धी पुरुषश्चास्ति तत्रमतुब्बाध्यस्य देशविशेषस्य बहुव्रीहेः प्रतिपत्तिसम्भवेनानुपपत्तितादवस्थ्यमिति वाच्यम् । यत्पदेन यादृशधर्मावच्छिन्नविषयताको बोधो मत्वर्थीयसमभिव्याहृतेन जायते मतुपः समभिव्याहारं विना तेन पदेन बहुव्रीहिणा तादृशधर्मावच्छिन्नविषयताकबोधसम्भवे तत्पदान्मत्वर्थीयो न भवतीत्यर्थस्य विवक्षितत्वात् । तथाच राजसम्बन्धिपुरुष सम्बन्धित्वावच्छिन्नविषयताकोबोधो मतुप्समभिव्याहृतेन राजपुरुषपदेन जायते बहुव्रीहिसमासेन तु राजाभिन्नपुरुषसम्बन्धित्वेनैवेति न दोषः । एवञ्चारूढवानरवानिति जरच्चित्रगुमानिति चारुढवानरसम्बन्धित्वेन जरदभिन्नचित्रगोसम्बन्धिपुरुषसम्बन्धित्वेन बोधतात्पर्येण साधुरेव । बहुव्रीहिणा स्वकर्मकारोहणकर्तृवारनरसम्बन्धिसम्बन्धित्वेन जरदभिन्नचित्रगोसम्बन्धिनः सम्बन्धित्वेन च मत्वर्थीयार्थस्याप्रत्ययादिति । अथाऽसुब्वत इति भाष्यप्रयोगदर्शनाद्रक्तदण्डवानित्यादिलौकिकप्रयोगदर्शनादुक्तव्युत्पत्तेः प्रायिकत्वेनात्रापि तत्क्षतेरनतिदोषत्वमिति चेदेवमप्यवृत्तमित्यस्यावृत्तीत्यस्य च पूर्वपदार्थप्रधानाव्ययीभावसमासत्वेन पूर्वपदार्थप्रधानसमासघटकोत्तरपदार्थेन समं समासाघटकपदस्यानन्वितत्वनियमेन वृत्तित्वे साध्याभाववतोन्वयस्यासम्भवो दोषः । नचोक्तनियमे किम्मानं भूतलस्याघटमित्यत्र घटे भूतलानन्वयः । एवं साध्याभाववद्वृत्तमितिवदभ्युपगममात्रेण भूतलोपघटमित्यस्य सत्त्वेपि घटे भूतलस्यानन्वयः, अव्ययीभावसमासस्याव्ययत्वेपि शोभनोपकुम्भमित्यादेः प्रामाणिकत्वेऽव्ययीभावात्मकाव्ययातिरिक्ताव्ययेनैवाव्ययिभावस्य समस्यमानत्वेन परिगणिताव्ययातिरिक्तस्याप्यव्ययीभावस्य समाससामान्यशास्त्रेण समस्यमानत्वस्य चाभ्युपगमनीयतया वास्तविके वा भूतलोपकुम्भमित्यादौ भूतलानन्वयः । शोभनोपकुम्भमित्यस्याप्रामाणिकत्वे उक्ताभ्युपगमे प्रयोजनविरहेण साध्याभाववतो वृत्तेरनन्वयापेक्षयाऽवृत्तमित्यव्ययीभावेन साध्याभाववतः समासत्वासम्भवनिबन्धनतादृशपदासाधुत्वरूपो वलीयानपिदोषः तादृशव्याख्याने वेदितव्य इति । तस्मात् साध्या-

भाववतो न वृत्तिर्विद्यते यत्र तत्साध्यभाववदवृत्ति तस्य भावस्तत्त्व-मित्येव विग्रहं स्वीकुर्वन्त्यभियुक्ताः । व्यधिकरणबहुव्रीहिश्चायं हेतुः-साध्याभाववदवृत्तिरित्यादेस्साध्याभाववदवृत्तपदोत्तरेणप्रत्ययादिना निर्वाहासम्भवेन स्वीकरणीयः । एवं व्यधिकरणबहुव्रीहेरुदा-हरणान्तरस्य सत्त्वेऽपि तद्वशेनात्र व्यधिकरणबहुव्रीहिस्वीकारास-म्भवात्तस्यासार्वत्रिकत्वादुक्तप्रयोग एवोदाहरणतया वक्तव्य इति दिक् ॥ ० ॥

*जागदीश्यामिदञ्चेति* अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्ति दानञ्चे-त्यर्थः । साध्यतावच्छेदकावच्छिन्नाभावप्रवेशेपि संयोगसम्बन्धावच्छि-न्नघटाभावस्य समवायावच्छिन्नवह्न्यभावस्य च तादृशतया तमादाय व्याप्यवृत्तिसाध्यकेऽव्याप्तिःस्यादतो धर्मविधया यः साध्यतावच्छेदको धर्मविधया तदवच्छिन्नत्वस्य संसर्गविधया यः साध्यतावच्छेकः संस-र्गविधया तदवच्छिन्नत्वस्य प्रतियोगितायां प्रवेशसूचनायाह "येनरू-पेण येन सम्बन्धेनेति" । अथ साध्यतावच्छेदकीभूतधर्मावच्छिन्नत्वे सति साध्यतावच्छेदकीभूतसम्बन्धावच्छिन्नत्वप्रवेशेऽपि घटाभावादि-वारणसम्भवाद्धर्मसंसर्गविधया तदवच्छेदकत्वप्रवेशो व्यर्थ इति चेन्न तत्समवायिनः संयोगेन साध्यतायां तत्समवायिनः समवायेनाभावीय-प्रतियोगिताया वारणाय साध्यतानिरूपितसंसर्गतावन्निष्ठावच्छेदक-ताकत्वस्य तत्संयोगिनः संयोगेनाभावप्रतियोगिताया वारणाय साध्य-तानिरूपितकिञ्चित्सम्बन्धावच्छिन्नावच्छेदकतावन्निष्ठावच्छेदकत्वस्य प्रवेशनीयत्वात्, संयोगिनः समवायेनाभावीयप्रतियोगितावारणाय च प्रतियोगितावच्छेदकताया अपि धर्मसंसर्गविधयाप्रवेशनीयत्वात् । वस्तुतः साध्यतावच्छेदकधर्मावच्छिन्नत्वस्य साध्यतावच्छेदकातिरि-क्तधर्मानवच्छिन्नत्वरूपस्यैव वाच्यतया तत्र साध्यतानिरूपितधर्मविध-यावच्छेदकतावदितरनिष्ठावच्छेदकत्वानिरूपितत्वमात्रप्रवेशे तादृशा-तिरिक्तसंसर्गमादायासंभवस्स्यादिति धर्म्मविधयावच्छेदकत्वानिरू-पितत्वं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्यापि साध्यतावच्छेदक-सम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्वरूपस्यैव वाच्यतया तादृशसं-सर्गातिरिक्तनिष्ठावच्छेदकत्वानिरूपितत्वमात्रप्रवेशे तादृशसंसर्गाति-रिक्तधर्म्ममादायासम्भवस्स्यादिति संसर्गविधयावच्छेदकत्वानिरूपि-तत्वं च प्रवेशनीयम् । एतेन संयोगिनस्समवायेनाभाववारणाय धर्म्म

विधया संसर्गविधया वाऽवच्छेदकत्वस्य निरूपितत्वम्प्रवेश्यं नतूभयमिति शङ्का निरस्ता। अथ साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्ति प्रतियोगित्वस्य वक्ष्यमाणरीत्यावश्यविवक्षणीयतया तत्र धर्मविधया संसर्गविधयावच्छेदकत्वत्वेनावच्छेदकत्वस्यानन्तर्भावेणैकविधानिवेशेनैवपूर्व्वोक्तनिखिलाभाववारणसंभवः संयोगिनस्समवायेनाभावीयप्रतियोगितायामपि साक्षात्परम्परासाधारणसाध्यतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकस्वरूपसमवायसंयोगगतरूपवृत्तित्वस्य विरहात्। प्रतियोगितायां समवायस्य संसर्गविधया अवच्छेदकत्वेन स्वरूपस्य तदनवच्छेदकत्वादिति चेन्नैवम् समवायिनस्संयोगाश्रयत्वेन साध्यतायां संयोगाश्रयस्य समवायेनाभावमादायाव्याप्तेर्दुरुद्धरत्वात् इति ॥ ० ॥

अन्यथा तु व्याप्यवृत्तिसाध्यकेत्यादि। ननु साध्यतावच्छेदकावच्छिन्नत्वस्य प्रवेशेऽपि महानसीयवह्न्यभावस्य न वारणसम्भवः न च साध्यतानिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वं वाच्यम् वैशिष्ट्यञ्च स्वसामानाधिकरण्य स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वानवच्छेदकानवच्छिन्नत्व स्ववृत्तित्वै तच्चतुष्टयसम्बन्धेन। स्वसामानाधिकरण्यनिवेशाद्वह्निमान्धूमादित्यत्र निरवच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादाय न दोषः स्वावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशात् घटानुयोगिककालिकेन वह्नित्ववदभावमादाय वह्नित्वाश्रयवान्धूमादित्यत्र नाव्याप्तिः, स्वानवच्छेदकानवच्छिन्नत्वनिवेशान्महानसीयवह्निवृत्तित्वविशिष्टजात्यवच्छिन्नाभावमादाय न लक्षणासम्भवः स्ववृत्तित्वनिवेशाद्रूपत्वन्यूनवृत्तिजातिमद्वान्रूपादित्यत्र निरवच्छिन्ननीलत्वादिनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादाय न व्याप्यत्वानिर्व्वाहः एतेन साध्यतावच्छेदकातिरिक्तधर्म्मानवच्छिन्नत्वस्य विवक्षणे प्रमेयवतस्समवायेन साध्यतायां सत्वे हेतौ साध्यतावच्छेदकातिरिक्ताप्रसिद्धिनिबन्धनो दोषो निरस्तः साध्यतावच्छेदकताविशिष्टान्यघटत्वादिनिष्ठावच्छेदकत्वस्य प्रसिद्धत्वादितिवाच्यम्। यत्र प्रतियोगिनिष्ठनानाविशेष्यतानिरूपिता परंपराऽनिरूपिता वा अवच्छेदकप्रकारता तत्रैवावच्छेदकतायभिन्नत्वेन महानसीयवह्न्यभावीयप्रतियोगितावच्छेदकताया ऐक्येन तत्र विशिष्टान्यत्वविरहादव्याप्तितादवस्थ्यात्. नच, स्वानवच्छेदकम-

हानसीयत्वत्वावच्छिन्नत्वसत्त्वेन विशिष्टान्यत्वसम्भव इति वाच्यं-
तार्णवह्न्यभावमादायाव्याप्तेः यदि चैकसम्बन्धेनैकप्रकारेण भासमा-
नधर्म्मेष्वेकावच्छेदकत्वमन्यथैकावच्छेदकत्वे निरवच्छिन्नत्वसावच्छिन्न
त्वयोर्विरुद्धयोस्सम्बन्धद्वयावच्छिन्नत्वस्य चापत्तेः नचतत्तद्धर्म्मवृत्ति-
त्वावच्छेदेनोभयोः स्वीकारे क्षत्यभावः प्रतिबध्यप्रतिबन्धकभावगुरुत्वा-
पत्तेः तथा हि समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन
वह्नित्वाविशिष्टवत्ताबुद्धौ समवायेन वह्नित्वविशिष्टं सत्कालिकेन महा-
नसीयत्वविशिष्टोनास्तीति बुद्धेः प्रतिबन्धकत्वापत्तिः समवायसम्ब-
न्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकतानिरूपिता सती कालिक-
सम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावावगा-
हिनिश्चयत्वस्य प्रतिबन्धकतावच्छेदकस्य तद्बुद्धावपि सत्त्वादतो
महानसीयत्ववृत्तित्वावच्छेद्यसमवायसम्बन्धावच्छिन्नत्ववदवच्छेदक-
तानिरूपितासती वह्नित्ववृत्तित्वावच्छेद्यकालिकसम्बन्धावच्छिन्नत्व-
वदवच्छेदकताकप्रतियोगिताकाभावावगाहिनिश्चयत्वेन प्रतिबन्ध-
कत्वस्वाच्यमितिगौरवम् अथ समवायसम्बन्धावच्छिन्नमहानसीयत्व-
प्रकारतानिरूपितकालिकसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानि-
रूपितविशेष्यत्वावच्छेद्यप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपि-
ताभावत्वावच्छेद्यविशेष्यत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेनप्रतिब-
न्धकताया वाच्यत्वान्नदोष इति चेन्न तथाविधाभाववत्ताबुद्धौ विशे-
ष्येविशेषणन्तत्रापि विशेषणान्तरमितिरीत्या जायमानायाः स-
मवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टवत्ता-
बुद्धेः प्रतिबन्धकतापत्तिवारणाय तत्तत्सम्बन्धावच्छिन्नतद्धर्म्मनिष्ठा-
वच्छेदकताकप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकत्वं वाच्यं तथा-
सत्युपलक्षणस्य प्रकारतावच्छेदकत्वे मानाभावेन नापत्तिः तत्रैका-
वच्छेदकत्वस्वीकारे कालिकेनमहानसीयत्वविशिष्टत्वे सति समवा-
येनवह्नित्वविशिष्टवैशिष्ट्यावगाहिबुद्धेः प्रतिबन्धकत्वापत्तेर्वारणायत-
त्तद्वृत्तित्वावच्छेद्यसम्बन्धावच्छिन्नत्वस्यनिवेशनीयतया गौरवतादव-
स्थ्यात् नच प्रकारतावच्छेदकत्वस्य नैकत्वंस्वीक्रियतइतिवाच्यंप्रतियो-
गितावच्छेदकत्वेऽपितदापत्तेरिति विभाव्यते तदापि महानसीयवह्नि-
मान्तज्ज्ञानत्वादित्यत्र वह्न्यभावमादायाव्याप्त्यापत्तेरितिचेदत्रकेचित्
साध्यतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमे

व साध्यतावच्छेदकावच्छिन्नत्वपदेनविवक्षणीयं वृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तथाच महानसीयत्ववह्नित्वयोरेका व्यासज्यवृत्त्यवच्छेदकता भिन्ना वास्तु प्रतियोगितावच्छेदकतात्वेनोभयथैव तस्या व्यासज्यवृत्तितया तत्प्रातियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य द्वित्व एव सत्त्वेन तेन सम्बन्धने तत्प्रातियोगिताया वह्निगतैकत्वेवृत्तित्वविरहेण महानसीयवह्न्यभावस्य महानसीयत्ववह्नित्वगतद्वित्वे वह्न्यभावप्रतियोगिताया वृत्तित्वविरहेण तदभावस्य च लक्षणाघटकत्वान्नाव्याप्तिसम्भवः। तादृशावच्छेदकतात्वावच्छिन्नत्वञ्च निरूपितत्वसम्बन्धावच्छिन्नसाध्यत्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वं तेन महानसियवह्नित्वावच्छिन्नसाध्यतानिरुपितवह्नित्ववृत्त्यवच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकवह्नित्वगतैकत्वे वह्न्यभावप्रतियोगित्वस्य वह्नित्वावच्छिन्नसाध्यतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकवह्नित्वगतैकत्वे स्वनिरूपितवह्नित्वनिष्ठावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन महानसीयवह्न्यभावप्रतियोगित्वस्य च वृत्तित्वेऽपि न क्षतिः यदि चैकम्वह्नित्वं महानसीयवह्नित्वावच्छिन्नस्य प्रतियोगित्वस्य साध्यत्वस्य वावच्छेदकमिति प्रतीतिविरहेण महानसीयवह्नित्वावच्छिन्नप्रतियोगित्वाद्यवच्छेदकतात्वेन तत्पर्य्याप्त्यनुयोगितावच्छेदकत्वं वह्नित्वगतैकत्वे मास्तु परन्त्वेकम्वह्नित्वमवच्छेदकमितिप्रतीतेः प्रामाणिकत्वेऽवच्छेदकतात्वावच्छिन्नप्रातियोगिताया यथाविवक्षितानिरुपितत्ववत्यानिरुपिकीभूतस्य पर्य्याप्त्यनुयोगित्वस्य वह्नित्वगतैकत्वेऽवच्छेदकत्वस्य सत्त्वादव्याप्तितादवस्थ्यमिति विभाव्यते तदा साध्यत्वादिनिष्ठावच्छेदकतानिरूपितत्वमप्युपादेयम् । अथ वह्नित्वावच्छिन्नसाध्यतावच्छेदकताया ऐक्येन तन्निष्ठप्रतियोगितावच्छेदकत्वस्य लाघवेन तद्व्यक्तित्वस्यैव कल्पनीयतया साध्यतावच्छेदकतात्वावच्छिन्नप्रातियोगित्वाप्रसिद्ध्याऽव्याप्तिरिति चेन्न एतल्लक्षणकर्तृमते गुरुधर्मस्यप्रतियोगितावच्छेदकत्वस्वीकारात् अन्यथा प्रमेयवह्निमान्धूमादित्यत्रसाध्याभावाप्रसिद्ध्यातद्घटभिन्नंपटत्वादित्यत्रतादृशवृत्तित्वाभावाप्रसिद्ध्या चाव्याप्त्यापत्तेः । अथवा साध्यतावच्छेदकतात्वादिसमनियतप्रतियोगितोपादेया व्याप्यताच वह्नित्वगतैकत्वावच्छिन्नानुयोगिताक-

पर्य्याप्तीयतद्व्यक्तित्वावच्छिन्नप्रतियोगितायामेव नतु महानसीयत्व-
वह्नित्वगताद्वित्वावच्छिन्नानुयोगिताकपर्य्याप्तीयप्रतियोगितायां सा-
ध्यतावच्छेदकतात्वस्येति न दोषः साध्यतावच्छेदकत्वावृत्तिरूपवृ-
त्तित्वम्वा विवक्षणीयं वृत्तित्वञ्च स्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्र-
तियोगितावच्छेदकधर्म्मशून्यत्वसम्बन्धेन तथाच वह्नित्वगतैकत्व-
पर्य्याप्तिप्रतियोगितावच्छेदकतद्व्यक्तित्वशून्यत्वस्य महानसीयत्वनि-
ष्ठावच्छेदकतायां सत्वेन महानसीयवह्निसाध्यकस्थले न वह्न्यभा-
वस्य लक्षणघटकताप्रसङ्गः रूपवृत्तित्वञ्च परम्परायाः संसर्ग-
त्वाभ्युपगमे यथाश्रुतमेवान्यथा तादृशरूपावच्छिन्नानुयोगिताक-
पर्य्याप्तीयाथानिरूपितत्वसम्बन्धावच्छिन्नाकिञ्चिन्निष्ठावच्छेदकताभि-
न्नावच्छेदकतात्वानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिता
तदाश्रयावच्छेदकतानिरूपितत्वम्　　एवञ्चानुपदोक्तावृत्तित्वम-
पि यत्किञ्चित्साध्यतावच्छेदकत्वावृत्तिधर्म्मानवच्छिन्नप्रतियोगि-
ताकपर्य्याप्त्यनुयोगितावच्छेदकत्वरूपम्वाच्यमवच्छेदकतात्वावच्छि-
न्नप्रतियोगितावारणाय चावच्छेदकतात्वन्यूनवृत्तिधर्म्मावच्छिन्न-
त्वेन प्रतियोगिता विशेषणीया। नन्वत्रतार्णवह्निविषयितया सा-
ध्यतायां तज्ज्ञानत्वे सद्धेतौ वह्नितार्णाभावमादायाव्याप्तिः प्रति-
योगित्वसाध्यत्वयोः समानधर्म्मावच्छिन्नत्वादिति चेन्न प्रतियोगि-
ताभेदम्विनाभावभेदस्या सम्भवेन तार्णवह्न्यभावप्रतियोगिताव-
च्छेदकत्वन्तार्णत्वविशिष्टवह्नित्ववह्नितार्णाभावमातियोगितावच्छेदक-
त्वम्वह्नित्वविशिष्टतार्णत्वे वाच्यं तादृशावच्छेदकतात्वावच्छिन्नपर्य्या-
प्त्यनुयोगितावच्छेदकत्वमपिबुद्धिभेदेनभिन्नयोस्तार्णत्ववह्नित्वगतद्वि-
त्ववह्नित्वतार्णत्वगताद्वित्वयोः कल्पनीयमितितार्णवह्न्यभावप्रतियो-
गितासमानप्रकृतसाध्यतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकता-
र्णत्ववह्नित्वगतद्वित्वे प्रतियोगिताया वृत्तित्वाविरहेणाव्याप्त्यसम्भवा-
दिति अथावच्छेदकतात्वावच्छिन्नत्वस्य तादृशावच्छेदकतात्वाति-
रिक्तधर्म्मानवच्छिन्नत्वरूपतया तादृशावच्छेदकतात्वस्यापितादृशा-
वच्छेदकतात्वगगनोभयभेदवत्वेनासम्भवप्रसङ्गः अवच्छेदकतात्वभे-
दस्यापि तथैवपरिष्कारेऽनवस्थाप्रसङ्गः यदि च विलक्षणप्रतियो-
गितासंसर्गेण तादृशावच्छेदकतात्वविशिष्टभेदवदवच्छिन्नत्वविशिष्टा-
भावत्त्ववरूपमेव तदित्युच्यते तदा विलक्षणस्वावच्छिन्नप्रतियोगि-

तासंसर्गेणसाध्यतावच्छेदकविशिष्टाभाव एव साध्याभावपदार्थो-स्त्वलमुक्तक्रमेण पर्य्याप्तिघटिततद्व्युत्पादनेनेति चेत्सत्यम् उक्तरूपवृत्तित्वस्यतत्तद्धर्म्मावच्छिन्नत्वरूपताप्रतिपादनेन विलक्षणप्रतियोगितायांवालोव्युत्पादयितुं शक्यः नान्यथा । तद्घटकभेदादिषु तच्छङ्कायां तदादिशब्दोपबन्धेन तद्धर्म्मावच्छिन्नप्रतियोगिताकाभावश्च तद्धर्म्मातिरिक्तधर्म्मानवच्छिन्नप्रतियोगिताकाभाव इति सामान्येन विलक्षणप्रतियोगितामात्रे व्युत्पादयितुं शक्य इत्युक्तरूपेण लक्षणकरणन्नायुक्तमिति गृहाण एवञ्च यद्यपिवह्निसाध्यकस्थलीयं लक्षणं वह्नित्वगतैकत्ववृत्तिप्रतियोगिताकाभाववदवृत्तित्वमेवैवमेवचेतरसाध्यकस्थलीयमपि लक्षणं तथापि प्रकृतसाध्यतावच्छेदकत्वत्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकाभाववदवृत्तित्वादिना प्रतिपादनन्नायुक्तंसकृदुक्त्यैव वालव्युत्पादनार्थत्वात् प्रकृतशब्दस्यतदादिवद्बुद्धिविषयतावच्छेदकावच्छिन्नत्वार्थकत्वात् अत्रोक्तावच्छेदकत्वं रूपस्यपरिचायकमात्रमन्यथा तद्विशेषितरूपवृत्तिप्रतियोगिताकाभाववदवृत्तित्वनिश्चयस्य वह्नित्वगतैकत्ववृत्तिप्रतियोगिताकाभाववदवृत्तित्वग्रहे प्रतिबन्धकत्वानुपपत्तेः एवञ्चतादृशावच्छेदकत्वसमानाधिकरणरूपनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितवृत्तितात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावत्वेनलक्षणता वोध्या अथात्रैकत्वादेः पर्य्याप्त्यनभ्युपगमेवह्निमान्धूमादित्यादावव्याप्तिः कालिकेन महानसीयत्वविशिष्टस्य समवायेनवह्नित्वविशिष्टस्य साध्यतायां धूमे सद्धेतौ समवायेन महानसीयत्वविशिष्टस्य कालिकेन वह्नित्वविशिष्टस्याभावमादायाव्याप्तिश्च नचैतदभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वमपि प्रतियोतिताविशेषणम्वाच्यं वैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन तथाच प्रतियोगितानिरूपितमहानसीयत्वनिष्ठावच्छेदकतायास्साध्यतानिरूपितमहानसीयत्वनिष्ठावच्छेदकतावच्छेदकसम्बन्धानवच्छिन्नत्वान्नाव्याप्तिरिति वाच्यं कालिकेन प्रमेयविशिष्टत्वे सति समवायेन प्रमेयविशिष्टयोः कालिकेन महानसीयत्वविशिष्टत्वे सति समवाये-

न वह्नित्वविशिष्टस्तस्य साध्यतायां धूमे समवायेन महानसीयत्वविशिष्टोक्तत्रितयविशिष्टाभावमादायाव्याप्तेः सामानाधिकरण्यास्यिहाय व्यापकत्वस्यप्रवेशेऽपिसमवायेन वह्नित्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वे सद्धेतौ समवायेन वह्नित्वविशिष्टाभावमादायाव्याप्त्यापत्तेः नच साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमेव साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकत्वं वृत्तित्वञ्च स्वनिरूपितावच्छेदकता घटकसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तथाच न दोष इति वाच्यं कालिकेन वह्नित्वविशिष्टत्वे सति समवायेन वह्नित्वविशिष्टत्वे सति समवायेन द्रव्यत्वविशिष्टस्य साध्यतायां तज्ज्ञानत्वे कालिकेन वह्नित्वविशिष्टत्वे सति समवायेन द्रव्यत्वविशिष्टाभावमादायाव्याप्त्यापत्तेः यद्यपि साध्यतावच्छेदकावच्छिन्नत्वं प्रकृते साध्यतासमनियतत्वं सामनैयत्यञ्च स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन अवच्छेदकतावत्ता च स्वसामानाधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वानवच्छेदकानवच्छिन्नत्वैतत्त्रितयसम्बन्धेन तथा च नप्रागुक्तदोषाणामवकाशः तत्र प्रतियोगिताव्यापकत्वदिशि व्यापकताघटकसम्बन्धकोटौ त्रयाणामुपादाने व्याप्यताघटकतया तत्तत्सम्बन्धानामनुपादाने च घटत्व निष्ठावच्छेदकत्वकालिकसम्बन्धावच्छिन्नवह्नित्वानिष्ठावच्छेदकत्वसावच्छिन्नवह्नित्वानिष्ठावच्छेदकत्वान्यादायवह्निमान्धूमादित्यादौव्याप्तिलक्षणाप्रसक्तिःव्यापकताघटकसंसर्गेऽपि तदनुपादाने विषयितया वह्निसाध्यकस्थले तार्णवन्ह्यभावमादायविषयितया समवायेन वह्नित्वविशिष्टसाध्यकस्थले कालिकेन वह्नित्वविशिष्टत्वे सति समावयेन वह्नित्वविशिष्टाभावमादाय विषयितयावह्निसाध्यकस्थले समवायेन वह्नित्वविशिष्टवन्ह्यभावमादायाव्याप्तिस्स्यादिति तत्तत्सम्बन्धनिवेशः साध्यताव्यायकत्वादिशि व्याप्यताघटकसम्बन्धकोटौ तत्तत्सम्बन्धानुपादान उक्तरीत्यैव वह्निमान्धूमादित्यत्राव्याप्तिस्स्यात् व्यापकताघटकसम्बन्धेष्वपि तेषामनुपादाने विषयितासम्बन्धेन तार्णवह्निसाध्यकस्थले वन्ह्यभावमादाय कालिकेन वह्नित्ववि-शिष्टत्वे सति समवायेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां समवायेन वह्नित्वविशिष्टाभावमादायविषयितयावह्नित्वविशिष्टवह्निसा-

ध्यकस्थले वन्ह्यभावमादायाव्याप्तिस्स्यादिति तत्तत्सम्बन्धनिवेशः अत्र तार्णवह्नेर्विषयितयासाध्यतायां वह्नितार्णाभावमादायाव्याप्तिवारणायैकत्वादेः पर्य्याप्त्यभ्युपगमेन साध्यतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वविवक्षणे स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेनावच्छेदकतावत्त्वस्वाव्यं तदुभय फलन्तु कालिकेन महानसीयत्वविशिष्टत्वे सति समवायेन वह्नित्वविशिष्टसाध्यकस्थले समवायेनमहानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टाभावमादायाव्याप्तिवारणं वह्नितार्णाभावमादायाव्याप्तिवारणायैकत्वादेः पर्य्याप्त्यनभ्युपगमे स्वावच्छेद्यविशेष्यतावच्छेदकतावृत्तित्वसम्बन्धावच्छिन्नसाध्यत्वाभाववत्त्वं प्रतियोगिताविशेषणं वृत्तित्वञ्च स्वात्मकसम्बन्धावच्छिन्नप्रमीयप्रकारत्वावच्छेद्यविशेष्यतावच्छेदकतावत्त्वसम्बन्धेन तद्वत्ता च सामानाधिकरण्यसम्बन्धेन प्रमीयत्वनिवेशादुक्तप्रतियोगितासम्बन्धेन तार्णवह्निप्रकारकभ्रमसत्त्वेऽपि न क्षतिः एवञ्चावच्छेदकतावत्त्वं पूर्वोक्तत्रितयसम्बन्धेनैव सामनैयत्यव्यावृत्तिरपि पूर्ववत् तथापि कालिकेन महानसीयत्वविशिष्टं सत्समवायेन वह्नित्वविशिष्टं यत्तद्विशिष्टस्य साध्यतायां सद्धेतौ समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टं यत्तादात्म्येन तद्विशिष्टाभावमादायाव्याप्तेरनुद्धार एव स्वानवच्छेदकानवच्छिन्नत्वस्य स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वरूपत्वे तद्वारणेऽपि प्रागुक्तसाध्यात्मकविशिष्टवत्स्साध्यतायां प्रागुक्तयुक्त्याऽव्याप्तेरनुद्धार एव तद्वारणायोक्तवैशिष्ट्यस्य स्वसामानाधिकरण्य स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वैतत्त्रितयसम्बन्धेन विवक्षणेऽनवस्थाप्रसङ्ग इतिचेदत्रोच्यते साक्षात्परम्परासाधारणनिरूपितत्वमङ्गीकृत्यावच्छेदकतावत्त्वनियामकस्वानवच्छेदकानवच्छिन्नत्वस्य स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वसम्बन्धावच्छिन्नस्वाभाववत्त्वरूपत्वोक्तौ न दोषावकाशः वैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन यत्तु स्वानवच्छेदकानवच्छिन्नत्वस्य स्वसामानाधिकरण्येन स्वावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वरूपत्वे प्रमेयसाध्यतावच्छेदकतावच्छेदकस्थलेस्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वाप्रसि-

द्धिस्स्यादिति स्वानवच्छेदकानवच्छिन्नत्वस्य वैशिष्ट्यघटकतयोपादानमावश्यकमेवेत्यनवस्थामसङ्गः। नच स्वसाजात्यमेव वैशिष्ट्यघटकं तथासति निरवच्छिन्नावच्छेदकत्वे विशिष्टान्यत्वप्रसिद्धिः साजात्यञ्च सावच्छिन्नत्वनिरवच्छिन्नत्वान्यतररूपेण एवञ्च नानवस्थाप्रसङ्ग इति वाच्यं प्रमेयाविशिष्टवतस्साध्यतायां घटत्वविशिष्टवदभावमादायाव्याप्त्यापत्तेः। घटत्वत्वावच्छिन्नावच्छेदकतायां विशिष्टान्यत्वाविरहादित्येवं केवलस्वानवच्छेदकानवच्छिन्नत्वस्यैवावच्छेदकतावत्त्वनियामकसंसर्गतामभ्युपेत्याप्यनवस्थापादनन्तन्न स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वसम्बन्धावच्छिन्नस्वाभाववत्त्वस्यैव तद्रूपतया विवक्षायान्तदसम्भवात् वृत्तित्वञ्च स्वनिरूपितावच्छेदकतासामानाधिकरण्यसम्बन्धेन एवञ्च घटत्वनिष्ठावच्छेदकतायां स्वनिरूपितप्रमेयत्वनिष्ठावच्छेदकत्वावृत्तित्वस्यैव सत्त्वेन न दोष इत्यलम्॥

अथ निरवच्छिन्नात्मत्वादिसाध्यतास्थले साध्यतावच्छेदकाप्रसिद्ध्याऽव्याप्तिरिति चेन्न साध्यवदन्यावृत्तित्वादिरूपव्याप्तेरेव तस्य लक्ष्यत्वात्। यद्वा आत्मत्वत्वातिरिक्तधर्म्मानवच्छिन्नप्रतियोगिताकाभाववदवृत्तित्वस्यैव तत्र व्याप्तित्वादात्मत्वत्वस्य साध्यतानवच्छेदकत्वेऽपि क्षत्यभावात्। शब्दैक्यस्यानुपादेयत्वात्। केचित्तु साध्यताविशिष्टनिरूपकताकाधिकरणत्वाभाववदवृत्तित्वमेवायमात्माज्ञानादित्यादिस्थलसाधारण्यानुरोधेन व्याप्तिः। वैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन वृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन तथा च न कोपि दोष इति। यत्तु साध्यताविशिष्टावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणत्वाभाववदवृत्तित्वं व्याप्तिः। वैशिष्ट्यञ्च स्वनिरूपितत्वनिरवच्छिन्नस्वसमानाधिकरणसाधारणधर्म्मनिष्ठावच्छेदकतात्वान्यतरसम्बन्धेन वृत्तित्वञ्चस्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तथाचायमात्माज्ञानादित्यत्र तादृशं रूपमात्मत्वनिष्ठतद्व्यक्तित्वगतैकत्वमेव प्रसिद्धमिति न दोष इति तत्तुच्छम्। पूर्वोक्तदोषेण पर्य्याप्तिघटितकल्पस्यानुपादेयत्वादिति वदन्ति। नन्वत्राधेयत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठाव-

च्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठाव-च्छेदकतानिरूपितवृत्तितात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाव-त्वेन तादृशाभावस्य लक्षणत्वेन तस्य च वह्नित्वेतरधर्म्मानव-च्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकाभाववन्निरूपितवृत्तित्वाभावरूप-स्य धूमहेतौ सत्त्वेनाव्याप्त्यभावाद्यर्थमेव प्रागुक्तसाध्यतावच्छेदका-वच्छिन्नत्वपरिष्करणमिति चेन्न । महानसीयवह्निमान्धूमादित्यत्र व-ह्नित्वेतरधर्म्मानवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावा-धिकरणनिरूपितवृत्तित्वाभावस्य हेतौ सत्त्वेनातिव्याप्त्यापत्तेः। न च साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगि-तावच्छेदकरूपनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकता-निरूपितानुयोगित्वनिष्ठावच्छेदकतानिरूपितपर्य्याप्तिनिष्ठावच्छेदकता-निरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छे-दकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदक-तानिरुपितवृत्तितात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावत्वेन ता-दृशाभावप्रवेशेनोक्तदोष इति वाच्यम् । वह्निमान् महानसी-यवह्निविषयकवह्निविषयकज्ञानमहानसीयवह्निविषयकज्ञानान्यतरत्वा-दित्यत्र वह्नित्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकता-कमहानसीयवह्नित्वावच्छिन्नप्रतियोगिताकाभावाधिकरणनिरूपितवृ-त्तित्वाभावस्य हेतौ सत्त्वेनातिव्याप्त्यापत्तेः । तद्वारणायेतर-वारकपर्य्याप्तिनिवेशे वृत्तित्वाभावकूटनिवेशे वा वह्निमान्धूमादित्य-त्राव्याप्त्यापत्तेरुक्तपरिष्कारस्य सार्थक्यसम्भवादिति । अत एव साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छे-दकरूपवृत्तिसाध्यनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेद-कतानिरूपिताभावनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकता-निरूपितवृत्तितात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावत्वेन तादृ-शाभावनिवेशोऽप्यपास्तः । उक्तव्यभिचारिणि महानसीयवह्नित्वा-वच्छिन्नवह्निनिष्ठप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावस्य हेतौ सत्त्वेनातिव्याप्त्यापत्तेः तद्वारणाय सामान्याभावस्य कूटस्य वा निवेशे वह्निमान्धूमादित्यत्राव्याप्त्यापत्तेरिति ॥ अथ तथाप्युक्तप-रिष्कारो व्यर्थः । महानसीयवह्न्यभावस्य ह्रदवृत्तेर्य्यदधिकरणं तन्नि-रूपितवृत्तित्वाभावस्य महानसीयवह्न्यभावाधिकरणह्रदनिरूपितवृत्ति-

स्वाभावस्य तादृशवृत्तित्वघटोभयाभावस्य हेतौ सत्त्वेनाव्याप्त्यभावादिति चेन्न । उक्तयुक्त्यैव धूमवान्वह्नेरित्यादावतिव्याप्त्यापत्त्या वृत्तित्वसामान्याभावस्यैवप्रवेश्यतया ऽव्याप्तिवारणासम्भवात् नचैवमप्यभावादिनिष्ठावच्छेदकतायान्तादृशप्रतियोगित्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वन्निवेश्यतांप्रतियोगित्वानिष्ठावच्छेदकतायां तु प्रतियोगित्वविशेषणीभूतरूपवृत्तित्वनिष्ठावच्छेदकतानिरूपितत्वमात्रमेव दोषाभावादिति वाच्यम् तत्क्षणविशिष्टप्रतियोगिताघटितवृत्तित्वाभावमादायातिव्याप्तेस्तथासत्यवारणात् । वस्तुतस्तु साक्षात्परम्परासाधारणनिरूपितत्वस्य स्वीकृततयावृत्तित्वनिष्ठप्रतियोगितायामेव प्रतियोगितावच्छेदककोटिप्रविष्टतत्तद्धर्म्मनिष्ठावच्छेदकताभिन्नावच्छेकत्वानिरूपितत्वं प्रवेश्यं लाघवादिति प्रतियोगिताविशेषणधर्म्मावच्छिन्नत्वस्येतरवारकस्य प्रवेश आवश्यक इति तद्व्यक्तेः स्वरूपतोभानाभ्युपगमे वह्न्यभावप्रतियोगितात्मकतद्व्यक्तिवह्न्यभावात्मकतद्व्यक्तिधूमाभावाधिकरणजलात्मकतद्व्यक्तीरादायधूमवान्वह्नेरित्यत्रातिव्याप्तिवारणायाधिकरणनिष्ठावच्छेदकतापर्य्यन्तन्तत्तदवच्छेदकतानिरूपितत्वंनिवेश्यं वृत्तित्वनिष्ठप्रतियोगितायामवच्छेदकतानिरूपितत्वन्नोपादेयम् । स्वरूपसम्बन्धावच्छिन्नत्वस्यप्रतियोगितायामावश्यकतया ध्वंसीयप्रतियोगितामादायदोषाप्रसक्तेः यत्तु प्रतियोग्यंशे उपलक्षणविधयाभानस्यापि स्वीकृततया तादृशप्रतीतीयप्रतियोगितामादाय दोष इति तन्न क्वचिदुपलक्षणविधया भानस्वीकारेऽपि तस्य प्रतियोगितावच्छेदकत्वस्वीकारेण दोषासम्भवात् । परन्तु लक्ष्यमात्रवृत्तेरेवलक्षणत्वे व्याप्तिभिन्ने वृत्तित्वसामान्याभावेऽप्युक्ताभावस्य वृत्तितया तस्य व्याप्तिलक्षणत्वानुपपत्तिभयेनाधिकरणादिनिष्ठावच्छेदकतानिरूपितत्वमुपादेयमेवोक्ताभावत्वेनवृत्तित्वसामान्याभावस्यापि व्याप्तित्वेनोपादेयमेवेत्यवधेयमिति दिक् ।

येन सम्बन्धेनेति अथ साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वप्रवेशेऽपि संयोगसमवायोभयसम्बन्धेन वह्निर्नास्तीत्यभावमादायाव्याप्तिः । साध्यतानिरूपितसंसर्गतानवच्छेदकीभूतधर्म्मानवच्छिन्नसंसर्गतानिरूपितत्वनिवेश उक्तदोषवारणेऽपि संयोगत्वसमवायत्वान्यतरवत्सम्बन्धेनवह्निसाध्यकधूमे समवायेन वह्न्यभावमादायाव्याप्तेरनुद्धार इति चेन्न स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्न-

पर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गतानिरूपितत्वविवक्षायान्दोषाभावात् । एतेन साध्यतावच्छेदकसम्बन्धातिरिक्त सम्बन्धानवच्छिन्नत्वनिवेशे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्यवैयर्थ्यमित्यप्यपास्तमुक्तनिवेशस्योभयपर्य्यवसायित्वात् ।

यत्तु रूपवान् । पृथिवीत्वादित्यादौ रूपध्वंसीयप्रतियोगितावारणाय तन्निवेश इति तन्न ध्वंसीयप्रतियोगितायां सामान्यधर्म्मावच्छिन्नत्वे मानाभावेन तस्य लक्षणाघटकत्वादिति एकत्वादेः पर्य्याप्त्यनभ्युपगमपक्षे साध्यतानिरूपितसंसर्गतासमनियतसंसर्गताकत्वं विवक्षितम् । सामनैयत्यञ्च स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन । अवच्छेदकतावत्ताच । स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन समवायेनसाध्यतास्थले स्वरूपत्वावच्छिन्नसंसर्गतामादायाव्याप्तिवारणाय स्वसामानाधिकरण्यनिवेशः स्वसंयोगवृत्तिसंयोगत्वाश्रयस्य तदवच्छेदकत्वे च समवायेन तादृशसंयोगत्वावच्छिन्नसंसर्गतामादायाव्याप्तिवारणाय स्वावच्छेदकसम्बन्धावच्छिन्नत्वप्रवेशः अतएव स्वसंयुक्तघटसंयोगवृत्तितद्व्यक्तित्वस्य कालिकेन स्वसंयुक्तवायुसंयोगवृत्तिद्व्यक्तित्वस्य च स्वरूपेणाश्रयस्य संसर्गत्वे विनिमयेन तादृशतद्व्यक्तित्ववत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावमादायाव्याप्तिरित्यप्यपास्तमिति दिक् ।

अथ साध्यतावच्छेदकनिष्ठं यत्तन्निरूपकप्रतियोगिताकाभाव एव प्रवेश्यताङ्किमवच्छेदकत्व पदोपादानेनेति चेन्न समवायेनप्रमेयसाध्यकसत्त्वे प्रमेयत्वनिष्ठवृत्तितानिरूपक घटाभावीप्रतियोगितामादायाव्याप्त्यापत्तेः नच साध्यतावच्छेदकनिष्ठं यत्तन्निरूपितत्वमेववाच्यमधिकरणे वृत्तितानिरूपकत्वस्यैव सत्त्वेनाव्याप्त्यभावादिति वाच्यं घटाभावसाध्यकघटाभावत्वे घटाभावत्वनिष्ठप्रतियोगित्वाभावाभावस्य प्रतियोगितारूपस्य स्वरूपसम्बन्धावच्छिन्नस्य साध्यतावच्छेकनिष्ठतया तन्निरूपित प्रतियोगित्वाभावनिष्ठप्रतियोगिताकाभावाधिकरणे घटाभावत्वे हेतोस्सत्वेनाव्याप्त्यापत्तेः नचावच्छेदकत्वाभावाभावस्यावच्छेदकतारूपस्य घटाभावत्वनिष्ठस्य निरूपिताया अवच्छेदकत्वाभावनिष्ठप्रतियोगिताया निरूपकीभूतस्याभावाधिकरणे हेतोः सत्त्वेनावच्छेदकत्व पदोपादनेऽपि अव्याप्तितादवस्थ्यमिति वाच्यं साध्यतावच्छेदकनिष्ठावच्छेदकतात्वावच्छिन्ननिरूपकतानिरूपितानिरूप्यतावत्त्वस्य विव-

क्षितत्वात् अवच्छेदकत्वाभावनिष्ठप्रतियोगितात्वेनावच्छेदकत्वाभा-
वाभावत्वेनैव निरूप्यनिरूपकभावेनोक्तदोषासम्भवात् । ननु
कालिकसम्बन्धावच्छिन्नघटत्वनिष्ठाधेयत्वेन; कालिकेन विशिष्टस्य
तादात्म्येन साध्यतायां घटत्वे सद्धेतौस्वरूपसम्बन्धावच्छि-
न्नतादृशवृत्तित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादायाव्याप्तिः
अवच्छेदकताया अवच्छेदकस्वरूपतानये स्वरूपसम्बन्धावच्छि-
न्नावच्छेदकत्वस्यापि कालिकसम्बन्धावच्छिन्नत्वादतःसाध्यतावच्छे-
दकताघटकसंसर्गतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावच्छेद-
कीभूतावच्छेदकतात्वावच्छिन्ननिरूपकतानिरूपितनिप्यतावत्त्वाम्विव-
क्षणीयन्तत्र निरूप्यतावच्छेदकतयावच्छेदकतात्वप्रवेशोविफलः घ-
टाभावत्वानिष्ठप्रतियोगितात्वस्यैवोक्तानिरूप्यतावच्छेदकत्वेन तस्य प्र-
तियोगित्वाभावप्रतियोगितानिष्ठनिरूप्यतानिरूपितनिरूपकतानवच्छे-
दकत्वेन पूर्वोक्ताव्याप्तेरप्रसक्तेरितिचेदवच्छेदकतायाः पदार्थान्त-
रत्व उक्तरूपेण विवक्षायां प्रयोजनाभावात् अधिकरणस्यचासाधा-
रणधर्म्मपुरस्कारेणानिरूप्यत्वेप्यधिकरणत्वविशिष्टस्य सनिरूपक-
त्वात्कस्येदमधिकरणमित्याकाङ्क्षादर्शनात्प्रमेयत्वनिष्ठवृत्तितामादाय
पूर्वोक्ताव्याप्तेर्दुर्वारत्वाद्धाऽवच्छेदकतात्वमुपादेयमेवेति गृहाण नच
वह्नेर्वह्नित्वावच्छिन्नप्रतियोगित्वाभावानुयोगिकस्ववृत्तिवाच्यत्ववत्त्वादि-
सम्बन्धेन साध्यतायां तादृशाभावनिष्ठतद्व्यक्तित्वसद्धेतौवह्नि-
त्वावच्छिन्नप्रतियोगितायाः प्रतियोगित्वाभावाभावात्मिकायानिरू-
पकस्य प्रतियोगित्वाभावनिष्ठप्रतियोगित्वस्य स्वाभावाभावतयाऽभाव-
स्याधिकरणेहेतोः सत्त्वेनाव्याप्त्याप्रागुक्तनिरूप्यतावच्छेदकीभूत
प्रतियोगितात्वघटितधर्म्मावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्त्व-
स्य विवक्षणीयतयावृत्तित्वनिष्ठनिरूपकतानिरूपितनिरूप्यतावच्छे-
दकाधिकरणत्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यत्वस्याभावे वि-
रहेण प्रागुक्तदोषाप्रसक्तेर्नोपादेयमवच्छेदकतात्वमिति वाच्यमेवं
सत्येतल्लाभायैवावच्छेदकतात्वस्योपादेयत्वात् वस्तुतस्तूक्तसार्थक्य-
प्रक्रियाया यथा श्रुतलक्षणाश्रितत्वेनाशिष्यबुद्धिवैशद्यमात्रप्रयोज-
नत्वमेव सिद्धान्ते पर्य्याप्तिघटितकल्पे सिद्धान्ततमे सामनैययत्य
घटितकल्पे च वैयर्थ्यशङ्कापिनास्ति तथा हि साध्यतानिरूपितत्वा-
वच्छिन्नपर्य्याप्तिप्रतियोगित्वस्य विवक्षितत्वे साध्यतानिरूपितत्वस्य

साध्यतात्वनिष्ठाधेयतादौ सत्त्वेन साध्यतानिरूपितत्वावच्छिन्नप-र्याप्त्यनुयोगितावच्छेदके साध्यतात्वसाध्यतावच्छेदकगतद्वित्वादौ प्रतियोगित्वस्य वृत्तित्वासम्भवेनासम्भवापत्तिः यत्किञ्चिन्निरूपित-त्वाविवक्षणे साध्यत्वाभावमादाय महानसीयवह्निसाध्यकस्थले व-ह्न्यभावादिकमादायाव्याप्त्यापत्तिः सामनैयत्यघटिते तु स्वनिरूपि-तत्वस्यैव संसर्गत्वे तेन च सम्बन्धेन साध्यत्वस्य साध्यतात्वनि-ष्ठवृत्तित्वे सत्त्वेन तत्र प्रतियोगित्वस्य सत्त्वासम्भवेनासम्भवापत्ति-रित्युपादेयमेवावच्छेदकतात्वमित्युपरम्यते।

अत्र प्रतियोगित्वानुपादाने वह्नित्वनिष्ठावच्छेदकतात्मकाधिक-करणनिरूपिताधेयत्वनिरूपकावच्छेदकतात्मकाभावाधिकरणे वह्नित्वे वह्नित्वत्वस्य वृत्तितयाऽऽधेयतया वह्नौ साध्ये वह्नित्वत्वेऽव्याप्तिः यद्यप्यवच्छेदकतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावच्छेदकी-भूतधर्म्मावच्छिन्ननिरूपकत्वविवक्षायान्नसम्भवति आधेयतात्वेन ता-दृशावच्छेदकतात्वेन निरूप्यनिरूपकभावविरहात् तथापि घटाभावस्य साध्यतायां धूमहेतौ घटाभावत्वनिष्ठावच्छेदकतानिरूपितघटाभाव-त्वावच्छिन्नवृत्तितानिरूपकपटाभावाधिकरणे पर्व्वतादौ हेतोस्सत्वे-नाव्याप्तिर्भवत्येवेति प्रतियोगितात्वोपादानम् सामनैयत्यघटिते पर्याप्तिघटितेऽप्ययमेव दोषोबोध्यः नच प्रतियोगित्वोपादानेऽपि घटाभाववान् घटाभावत्वत्वादित्यादौ तादृशप्रतियोगितानिरूपिता-वच्छेदकत्वाधिककरणे घटाभावत्वे हेतोः सत्त्वेनाव्याप्तिरतोऽभाव-त्वावच्छिन्ननिरूपकत्वम्विवक्षणीयन्तथाच प्रतियोगित्वानुपादानेऽपि वृत्तितानिरूपकपटाभावात्मकाधिकरणमादाय न दोष इति वाच्यं घटाभावत्वावच्छिन्नवृत्तितानिरूकत्वस्य पटाभावत्वेन सम्भवात्पटा-भावस्य वृत्तित्वमिति प्रतीतेः नचाभावत्वावच्छिन्ननिरूपितत्वमेव-विवक्षणीयं पटाभावस्याधिकरणत्वेनैववृत्तितानिरूपितत्वाददोष इति वाच्यमभावे प्रतियोगित्वनिरूपकत्वस्यैव स्वीकारेऽसम्भवापत्तेरिति ध्येयम्॥

अथ प्रतियोगितानिरूपकत्वेनैवाभावः प्रवेश्यतामभावत्वेन त-त्प्रवेशोऽव्यर्थ इति चेन्न वह्नित्वावच्छिन्नप्रतियोगितानिरूपकावच्छेद-कत्वाधिकरणे वह्नित्वे वह्नित्वत्वस्य वृत्या वह्निमान्वह्नित्वत्वादित्यत्रा-व्याप्तेः अवच्छेदकत्वस्यावच्छेदकत्वाभावाभावत्वेऽपि प्रतियोगितानि-

रूपकतावच्छेदकाभावत्वावच्छिन्नाधिकरणत्वस्य प्रवेशात्प्रतियोगितानिरूपकत्वविशिष्टाभावत्वावच्छिन्नाधिकरणत्वस्य वा प्रवेशाद्दोषासम्भवादिति यद्वा घटाभावस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्य स्वरूपेण साध्यतायां घटत्वे सद्धेतौ घटाभावत्वावच्छिन्न प्रतियोगितानिरूपकानुयोगित्वाधिकरणे घटे हेतोस्सत्वेनाव्याप्त्याभावत्वेनाभावप्रवेश इति बोध्यम् यत्तु तत्सम्बन्धावच्छिन्नाधेयत्वतत्संसर्गप्रतियोगित्वयोरैक्यपक्षमाश्रित्य संसर्गीयप्रतियोगितानिरूपकस्वाधिकरणत्वादिरूपसंसर्गस्य साध्यवत्ताबुद्धिविरोधिघटकस्वरूरूपेणाधिकरणे पर्वते स्वाधिकरणत्वसम्बन्धेन वह्निसाध्यकधूमहेतोर्वृत्त्याऽव्याप्तिरतोऽभावत्वेनाभावप्रवेश इति तन्न आधेयतानिष्ठकालिकासम्बन्धावच्छिन्नाधेयत्वस्य कालिकेन साध्यतायां घटत्वे प्रतियोगितायाः प्रतियोगिस्वरूपत्व आधेयत्वनिष्ठप्रतियोगिताया आधेयतात्मकत्वेन कालिकसम्बन्धावच्छिन्नतया तन्निरूपकाभाववतिघटे हेतोर्वृत्तित्वेनाव्याप्तिरतस्साध्यतानिरूपितसंसर्गतावच्छेदकीभूतधर्म्मावच्छिन्नसंसर्गतात्वावच्छिन्ननिरूप्यतानिरूपितप्रतियोगितात्वावच्छिन्ननिरूपकत्वस्य प्रवशनीयतया संसर्गतात्वेन सांसर्गिकप्रतियोगितात्वेन निरूप्यनिरूपकभावविरहेणाभावपदार्थप्रवेशमन्तराव्याप्तिविरहादिति ॥

अथ साध्याभावाधिकरणत्वं सम्बन्ध सामान्येनसाबन्धविशेषेण वा नाद्यः कालिकेन वह्न्यभावाधिकरणे पर्वते धूमस्य वृत्त्यावह्निमान्धूमादित्यत्राव्याप्त्यापत्तेः न द्वितीयः तद्धि न स्वरूपं घटत्वाभाववान् पटत्वाद्दित्यत्राव्याप्त्यापत्तेः नाप्यत एव संयोगः नापि समवायः घटाधिकरणत्वाभाववान् तद्व्यक्तित्वादित्यत्राव्याप्तेः अत्र केचिदभावाभावस्यातिरिक्तत्वे स्वरूपेण साध्याभावाधिकरणत्वविवक्षायां न दोष इत्याहुः अन्येतु घटत्वाभावाभावस्य घटत्वरूपत्वेऽपि घटत्वत्वेनैव स्वरूपेण विरोधस्सत्तायांनतु घटत्वाभावाभावत्वेन तथा च साध्याभावत्वावच्छिन्नस्य स्वरूपेणाधिकरणत्वविवक्षायान्नदोष इति वदन्ति येतु स्वरूपसमवायान्यतरसम्बन्धेन साध्याभावाधिकरणत्वविवक्षायान्न दोषः नच संयोगसम्बन्धावच्छिन्नघटाभावे साध्ये कपालत्वहेतौघटात्मकसाध्याभावस्य समवायेनाधिकरणेकपालत्वस्यवृत्तित्वादव्याप्तिरिति वाच्यं तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावाभावत्वावच्छिन्नस्य

तेनैवाधिकरणत्वस्वीकारेणोक्तदोषासम्भवात् नचान्यतरसम्बन्धेन तदवच्छिन्नाधिकरणत्वाप्रसिद्धिरिति वाच्यम् संयोगस्वरूपसमवायान्यतमसम्बन्धेनाधिकरणत्वस्य विवक्षितत्वादिति मन्यन्ते तेषां कालिकसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वाभावे साध्य आत्मत्वे साध्याभावत्वावच्छिन्नाधिकरणत्वाप्रसिद्ध्या कालिकसम्बन्धघटितान्यतमसम्बन्धोपादाने वह्निमान्धूमादित्यादौचाव्याप्तिर्दुरुद्धरैवेतिबोध्यम् ॥

नव्यास्तु साध्यवत्ताबुद्धिविरोधिताघटकसम्बन्धेन साध्याभाववदधिकरणत्वोक्तौ न कोऽपिदोषः । साध्यवत्ताबुद्धिविरोधित्वञ्च साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्तिपनुयोगितावच्छेदकरूपवृत्तिप्रकारतानिरूपिताकिञ्चिद्धर्म्मावच्छिन्नविशेष्यताकग्रहत्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकत्वम्बोध्यम् । नच तादृशप्रकारत्वावच्छिन्नप्रतिबध्यत्वमेवोच्यतामलं व्यापकत्वप्रवेशेनेति वाच्यम् कालिकसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वाधिकरणत्वाभावसाध्यकस्थले स्वरूपेण तादृशात्मत्वाधिकरणत्वाभावगगनत्वोभयाभाववद्वह्नित्वमित्यादिनिश्चयप्रतिबन्धकतानिरूपिताया एकत्रद्वयंरीतिज्ञानसाधारणप्रतिवध्यतायास्तादृशप्रकारित्वावच्छिन्नत्वेन स्वरूपस्यापिविरोधिताघटकसम्बन्धत्वेनाव्याप्त्यापत्तेः प्रतिवध्यता च साध्यतावच्छेदकविशिष्टविषयकग्रहत्वाव्यापिका ग्राह्या नातो वह्निमत्पर्व्वतकालीनात्मत्वाधिकरणत्वाभावसाध्यकस्थले स्वरूपसम्बन्धमादायाव्याप्तिरिति वस्तुतस्तादृशप्रतिबन्धकतावच्छेदकप्रकारताविशिष्टसाध्याभावत्वावच्छिन्ननिरूपकत्वमवश्यं वाच्यं वैशिष्ट्यञ्च स्वावच्छेदकसम्बन्धावच्छिन्नत्वं स्वावच्छेदकीभूतधर्म्मावच्छिन्नत्वोभयसम्बन्धेन तथाच पूर्वोक्तदोषद्वयस्यासम्भवेन तादृशग्रहत्वव्यापकत्वमव्यापकत्वञ्च नविवक्षणीयम् अतएव कालिकेन वह्न्यभावव्याप्यधूमस्य कालिकेन बुद्धेः प्रतिबन्धकतया तदवच्छेदककालिकसम्बन्धावच्छिन्नसाध्याभावत्वावच्छिन्ननिरूपकताकाधिकरणत्वमादाय न दोषः निरूपकतायां साध्याभावत्वावच्छिन्नत्वप्रवेशाद्धटस्य प्रतियोगितया साध्यतायां घटाभावत्वे हेतौ पटाभावः प्रतियोगितया घटवानितिबुद्धिप्रतिबन्धकीभूतस्य पटाभावे घटाभाव इति ज्ञानस्य या प्रकारता तद्विशिष्टस्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नपटाभावत्वावच्छिन्ननिरूपकताकाधिकरणतावति घटाभावे हेतोः सत्त्वेऽपि नाव्याप्तिः । नच

प्रकारतायामाधेयत्वसम्बन्धानवच्छिन्नत्वस्वाच्यमिति वाच्यमाधेयत्व-सम्बन्धावच्छिन्नप्रतियोगिताकाभावसाध्यकस्थले तादृशाभावाभाव-त्वावच्छिन्नस्यान्यसम्बन्धेन सत्ताविरहेणाव्याप्त्यापत्तेः नच स्वा-वच्छेदकधर्मावच्छिन्नत्वम्विहाय स्वसामानाधिकरण्यस्यैवास्तु स-म्बन्धतेति वाच्यं घटवृत्तित्वाभावस्य कालिकसम्बन्धावच्छिन्नाभावे साध्य आत्मत्वे साध्यवान्घटइतिवुद्धिप्रनिवन्धकीभूतायास्साध्यं-घटावृत्तीतिवुद्धेर्य्यास्वरूपसम्बन्धावच्छिन्नघटवृत्तित्वाभावत्वावच्छि-न्नप्रकारतातद्विशिष्टनिरूपकतामादायाव्याप्त्यापत्तेः स्वावच्छेदक-धर्म्मावच्छिन्नत्वमपि पर्य्याप्तिगर्भं वाच्यमन्यथाऽनुपदोक्तस्थले म-हानसीयवह्न्यादिसाध्यकस्थले च कालिकेन वह्निसामान्याभावव्या-प्यमहानसीयवह्न्यभाववानितिप्रतिवन्धकज्ञानीयप्रकारतामादाया-व्याप्त्यापत्तेः प्रतिबध्यता च साध्याभावविषयत्वानवच्छिन्ना ग्राह्या-नातोविषयतात्वसाध्यकप्रकारतात्वे सद्धेतौ विषयतात्वाभावोविषय-तात्ववानितिवुद्धिप्रतिवन्धकस्य विषयतात्वाभावे विषयतात्वाभाव इतिज्ञानस्य या स्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नवि-षयतात्वाभावत्वावच्छिन्नप्रकारता तामादायाव्याप्त्यापत्तिः प्रतिब-न्धकतावच्छेदकता च प्रकारतात्वावच्छिन्ना वाच्या तेन ह्रदवृत्ति-वह्न्यभाववान् कालिकेनपर्व्वतइतिज्ञानीया या ह्रदवृत्तित्वप्रकारता-निरूपितविशेष्यतात्वेन प्रतिवन्धकतावच्छेदिकायाः कालिकसम्ब-न्धावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारतायाः कालिकसम्बन्धावच्छि-न्ननिरूपकतायां सत्त्वेऽपि न वह्निमान्धूमादित्यत्राव्याप्तिः प्रकारता चावच्छेकदतानात्मिकात्र विवक्षिता नातोवह्नेः साध्यतायान्तद्वह्नि-त्वे सद्धेतौ वह्न्यभावव्याप्यवत्तानिश्चयप्रतिवन्धकतावच्छेदकप्रति-योगित्वसम्वन्धावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारतामादायाव्याप्तिः तादृशप्रकारताया अवच्छेदकतात्वेनावच्छेदकत्वपक्षेऽवच्छेदकताना-त्मकत्वन्नोपादेयम् प्रतिबन्कता च ज्ञानवैशिष्ट्यानवच्छिन्ना ग्राह्या तेन स्वरूपेणह्रदवभाववान्कालिकेनवह्न्यभाववानितिनिश्चयविशिष्टस्य कालिकेन वह्न्यभाववानिति निश्चयस्य प्रतिवन्धकत्वेऽपि न क्षतिः अथ महानसीयवह्निसाध्यकतद्धूमहेतुकस्थले वह्न्यभाववदभाववत्का-लीन घटोमहानसीयवह्निमानितिंबुद्धौ तादृशघटः कालिकेनमाहानसी-यवन्ह्यभाववानित्यस्य प्रतिबन्धकतया तदीयप्रकारतामादायाव्याप्तिः

नच तस्य निश्चयविशिष्टनिश्चयत्वेनैव प्रतिबन्धकत्वं तादृशघटत्वाव-च्छिन्नविशेष्यतानिरूपिताभावत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकत्वसम्भवे निश्चयविशिष्टनिश्चयत्वेनप्रतिबन्धकत्वे माना-भावात् नचसाध्याभावविषयत्वानवच्छिन्नत्वेन प्रतिबध्यत्वस्य वारणं वन्ह्यभावस्यासाध्याभावत्वात्। सध्यप्रतियोगिकाभावनिवेशे वन्ह्य-भावकालीनमहानसीयवह्निसाध्यकस्थले महासीयवह्न्यभावकाली-नवह्निसाध्यकस्थले चाव्याप्त्यापत्तेरितिचेन्न तादृशप्रतिबन्धकता-वच्छेदकताविशिष्टनिरूपकताया विवक्षितत्वात् वैशिष्ट्यञ्च स्वाश्रयावच्छेदकसम्बन्धावच्छिन्नत्व स्वनिरूपितावच्छिन्नत्वसम्ब-न्धावच्छिन्नावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयेगितावच्छेदकरूपवृ-त्तित्वोभयसम्बन्धेन तथासत्यभावत्वावच्छिन्न प्रकारतात्वावच्छिन्ना-वच्छेदकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकाभाव-त्वगतैकत्ववृत्तित्वस्यानिरूपकतायां विरहेणाव्याप्त्यसम्भवात्।

यद्वा साध्यतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेद-करूपवृत्तित्वं प्रतिबध्यतायान्निवेशनीयम्। वृत्तित्वञ्चस्वनिरूपित प्रकारत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छे-दकतात्वावच्छिन्नपर्य्याप्त्यनुपयोगितावच्छेदकत्वसम्बन्धेन तथाचो-क्तप्रतिबध्यताया उक्तसम्बन्धेन वह्नित्वगतैकत्व एव वृत्तित्वन्तु महानसीयत्ववह्नित्वगतद्वित्व इति न दोष एवम् साध्यवत्ताग्रहप्र-तिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकप्रकारतावच्छेदकसम्बन्धा-वच्छिन्नत्वाविवक्षयैवोक्तदोषो वारणीयः एतस्य च परिष्कारः स्वयमुह्य एतेन महानसीयवह्निव्यापकाभाववदभाववत्कालीनघटध-र्म्मिकमहानसीयवह्निमत्ताबुद्धिप्रतिबन्धकतामादायाव्याप्तिरुक्तविवक्षा-यामप्यनिवार्य्यैति निरस्तम् अथवा साध्याभावविषयत्वानवच्छिन्न त्वम्परित्यज्यैकत्ववृत्तिविशेष्यत्वावच्छिन्नत्वस्यप्रतिबध्यत्वाविशेषण-तया विवक्षायान्नकोऽपिदोष इति। नच घटभिन्नङ्कपालत्वादित्यत्र साध्याभावस्य घटत्वरूपस्य विरोधिताघटकसमवायेनाधिकरणे कपाले हेतोर्वृत्त्याऽव्याप्तिरिति वाच्यम् तस्य घटत्वस्वरूपत्वे ऽपि घटभेदाभावत्वावच्छिन्नाधिकरणतायाः घट एव स्वीकारेणादोषा-सम्भवादितिप्राहुः॥

परेतु साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्य-

नुयोगितावच्छेदकरूपवृत्तित्वे सति साध्यतानिरूपितसंसर्गताव-च्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गताक-प्रतियोगिताकाभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्ब-न्धेन साध्याभावाधिकरणत्वविवक्षायान्नदोषः वृत्यन्तमात्मत्व-प्रकारकप्रमाविशेष्यत्वस्य कालिकेनाभावस्य स्वरूपेण साध्यताया-मात्मत्वे कालिकसम्बन्धावच्छिन्नसाध्याभावस्य स्वरूपेणाभावस्य साध्यात्मकतया तत्प्रतियोगितावच्छेदकस्वरूपेण साध्याभावाधिक-रणे हेतोर्वृत्त्याऽव्याप्तियारणाय विशेष्यत्वाभावसाध्यकस्थले तादृश-प्रतियोगितावच्छेदकोयो यः सम्बन्ध स्तत्तत्सम्बन्धेन साध्याभावा-धिकरणत्वविवक्षणे स्वरूपकालिकाभ्यां विशेष्यत्वाधिकरणे जन्य-आत्मत्वहेतौ रवृत्याऽव्याप्तिविरहाद्विशेष्यत्व आत्मत्वप्रकारकप्रमा-निरूपितत्वनिवेशनन्तथासति तस्योभयसम्बन्धेनाधिकरणत्वाप्रसि-द्धैवाव्याप्तिसम्भवः । अथात्मानुयोगिकस्वरूपसम्बन्धावच्छिन्न-साध्याभावस्यात्मत्वप्रकारकप्रमाविशेष्यतानात्मकतया तदभाव-स्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्यात्मानुयोगिकस्वरूपेण वृत्तिमत्साध्यस्वरूपतया तदवच्छेदकस्वरूपमादायात्मत्वप्रकारक-प्रमाविशेष्यत्वाभाववानात्मत्वादित्यत्राव्याप्त्या तद्घटासमानकालो नघटस्य कालितकेन योऽभावस्तस्यतद्घटानुयोगिकस्वरूपेणसा-ध्यतायान्तद्घटत्वे स्वरूपेण साध्याभावस्योक्तघटस्वरूपतया कालि-केन तदभावस्य साध्यात्मकस्य प्रतियोगितावच्छेदकेन कालिकेन साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभावस्य तद्घटसमानका-लीनपदार्थान्तरवृत्तितया ऽतिरिक्तस्याधिकरणे हेतोर्वृत्याऽव्याप्त्या च रूपवृत्तिसंसर्गताकत्वमवश्यं विवक्षणीयन्तथाचात्मत्वप्रकारक-प्रमाविशेष्यत्वाभावस्य स्वरूपेणाभावस्योक्तविशेष्यत्वरूपतया स्व-रूपेण तदभावस्य सर्व्वथा त्मावृत्तेस्साध्यस्वरूपत्वविरहेणाव्या-प्त्यभावात् साध्यप्रतियोगिकत्वनिवेशनम्व्यर्थमिति चेन्न कालिके-न घटाभावस्य यः कालिकेनाभावस्तस्यकालिकेन साध्यतायां ज-न्यत्वहेतावव्याप्तेः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताक-घटाभाववृत्तिसाध्यनिरूपितप्रतियोगितावच्छेदकेन कालिकेन सा-ध्याभावाधिकरणे जन्यत्वहेतोर्वृत्तेः नचैमवपि रूपवृत्तिप्रतियोगि-ताकत्वनिवेशनम्व्यर्थमिति वाच्यम् आत्मवृत्तित्वविशिष्टोक्तविशे-

ध्यत्वाभावस्य यस्स्वरूपेणाभावस्तस्यातिरिक्तस्य स्वरूपेणाभावस्य आत्मवृत्तित्वविशिष्टोक्तविशेष्यत्वाभावरूपत्वेन साध्यतया तत्प्रतियोगितावच्छेदकस्वरूपमादायात्मत्वप्रकारकप्रमाविशेष्यत्वाभाववानात्मत्वादित्यादौ तद्घटवृत्तितद्घटासमानकालीनघटाभावस्य स्वरूपेण साध्यतायांतद्घटत्वे शुद्धतादृशघटाभावाभावस्य तादृशघटरूपतया कालिकेन तदभावात्मकसाध्यप्रतियोगितावच्छेदककालिकमादायाव्याप्त्यापत्तेश्चेति ।

यत्तु प्रतियोगित्वोपादानमनर्थकमिति तन्न तादृशरूपवृत्तिसाध्यतावच्छेदकसम्बन्धावच्छिन्नात्मत्वप्रकारकप्रमाविशेष्यत्वाभावत्वावच्छिन्नवृत्तितानिरूपकस्य कालिकसम्बन्धावच्छिन्नसाध्याभावस्य स्वरूपेणाभावात्मकसाध्यप्रतियोगितावच्छेदकस्वरूपमादायाव्याप्त्यापत्तेः नचैवमप्यभावत्वेन अभावप्रवेशो व्यर्थ इति वाच्यं कालिकेनावच्छेदकत्वाभावस्य कालिकेन साध्यतायां, जन्यत्वे तादृशप्रतियोगितानिरूपकावच्छेदकतावृत्तिसाध्यनिरूपितप्रतियोगितावच्छेदककालिकसम्बन्धेन साध्याभाववति हेतोर्वृत्त्या ऽव्याप्त्यापत्तेः, अथ कालिकेनप्रमेयाभावस्य कालिकेन साध्यतायां जन्यत्वहेतौ साध्यनिरूपितप्रमेयत्वावच्छिन्नप्रतियोगिताया निखिलप्रमेयवृत्तेस्साध्याभाववृत्तितया तदवच्छेदकालिकमादायाव्याप्तिरभावोपादानेऽपि दुर्वारैवेति चेन्नैवम् अभावोपादानेसाध्याभावत्वसमनियतप्रतियोगिताकत्वस्य विवक्षितुंशक्यतयोक्तदोषवारणसम्भवादन्यथा तादृशप्रतियोगिताकत्वस्यावच्छेदकत्वादिसाधारणतया तत्समनियतप्रतियोगित्वाप्रसिद्ध्याऽसम्भवापत्तेः नच प्रमेयाभावसाध्यकस्थलीयदोषस्य व्याप्यत्वविवक्षयापि वारणसम्भवेन व्यापकत्वनिवेशे प्रयोजनाभावादभावत्वप्रवेशो व्यर्थ इति वाच्यं । समवायसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य स्वरूपेण साध्यतायां जातित्वादिहेतावव्याप्त्यापत्तेः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य यः स्वरूपेणाभावस्तस्यापि साध्यरूपतया तदीयप्रतियोगित्वस्य केवलान्वयिनः साध्याभावत्वस्य व्याप्यतया च तदवच्छेदकस्वरूपेण साध्याभावाधिकरणे हेतो वृत्तेः यद्वा सामान्यीयप्रतियोगितायां साध्याभावत्वावच्छिन्नत्वमुपादेयन्तथाच कालिकन प्रमेयाभावसाध्यकस्थले न दोषः कालिकसम्बन्धावच्छिन्नप्रतियोगितायाः

साध्याभावत्वानवच्छिन्नत्वात् नच साध्यतावच्छेदकावच्छिन्न साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिकत्वावच्छिन्नत्वमेवोच्यतामलमभावत्वप्रवेशेनेतिवाच्यं तादृशप्रतियोगितात्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावत्संसर्गतालाभार्थत्वात् तदप्रवेशे विशेष्यत्वाभावस्य स्वरूपसम्बन्धेन साध्यतायामात्मत्वे स्वाभाववत्त्वसंसर्गीया या साध्याभावत्वावच्छिन्ना प्रतियोगिता तस्यास्तत्संसर्गेण साध्यात्मकेन निरूपितततया तत्सम्बन्धावच्छिन्नाधेयतारूपतयाच तदवच्छेदकस्वाभाववत्त्वसम्बन्धेन साध्याभावाधिकरणे हेतोर्वृत्तित्वात् अत्यन्ताभावनिरूपितत्वोपादाने संसर्गीयप्रतियोगितामादायोक्तदोषासम्भवेऽपि अत्यन्ताभावत्वसाध्यकतद्व्यक्तित्वे सद्धेतौ साध्याभावनिष्ठा या स्वाभाववत्वससर्गीयप्रतियोगिता तामादायाव्याप्तिः। प्रतियोगित्वाधेयत्वादीनामाश्रयात्मकत्वेनैकत्वे वह्निनिष्ठसंयोगसम्बन्धावच्छिन्नप्रतियोगित्वकालिकसम्बन्धावच्छिन्नाधेयत्वयोरैक्येन कालिकस्य प्रतियोगितावच्छेदकसंसर्गत्वेनाव्याप्तिश्च दुर्व्वारास्यादित्यवधेयम् अथ घटभिन्नंपटत्वादित्यत्र साध्याभावस्यघटत्वस्वरूपतया तद्वृत्तिभेदीयप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिः। साध्याभावस्य घटात्मकत्वे प्रतियोगित्वप्रसिद्धावपि तदवच्छेदकतादात्म्येन घटत्वात्मकसाध्याभावस्याधिकणे घटत्वत्वस्य वृत्त्याऽव्याप्त्यापत्तिघटभिन्नं घटत्वत्वादित्यादाविति चेन्न धर्म्मिभेदधर्म्मात्यन्ताभावयोरैक्यस्वीकारेण घटत्वनिष्ठप्रतियोगिताया अपि भेदनिरूपितत्वसम्भवात्। नच घटभिन्नं घटत्वत्वादित्यत्राव्याप्तितादवस्थ्यमिति वाच्यम्। अत्यन्ताभावत्वनिरूपितत्वेनप्रतियोगित्वस्यविशेषणीयत्वात्। अथैवमपि घटभिन्नं कपालत्वादित्यत्रात्यन्ताभावत्वनिरूपितप्रतियोगितावच्छेदकसमवायेन घटात्मकसाध्याभावाधिकरणे कपाले कपालत्वहेतोर्वृत्तितयाऽव्याप्त्यापत्तिः नच साध्याभावत्वावच्छिन्ननिरूपकतायां तादृशप्रतियोगिताविशिष्टत्वं स्वसामानाधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन वाच्यं तथाच घटत्वनिष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगिताविशिष्टत्वस्य घटनिष्ठनिरूपकतायाम्विरहान्नाव्याप्तिः एवं साध्याभावस्य घटघटत्वोभयात्मकत्वेऽपि तादात्म्यावच्छिन्नायास्समवायावच्छिन्नाया वा घटभेदाभावत्वावच्छिन्ननिरूपकताया निरूपितमाधिकरणत्वं घट एव कपालादिषु घट-

भेदोनास्तीत्यप्रत्ययात् । तथाच विनाप्युक्तनिवेशस्वारणसम्भव इति वाच्यम् अत्यन्ताभावत्वनिरूपितत्वस्य व्यर्थत्वापत्तेरितिचेन्न। अभावाभावस्य प्रतियोगिरूपत्वस्यापि दर्शनाद्घटस्य तादात्म्येन-साध्यतायां घटभेदाभावस्यघटानात्मकत्वेसाध्याभाववृत्तिसाध्यसा-मान्यीयप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तेरत्र घटभेदाभावस्य घटस्वरू-पत्वेऽपि लाघवाद्घटभेदाभावत्वावच्छिन्नाधिकरणतानिरूपकत्वस्य घटत्वे एवस्वीकरणीयत्वात् तथाच न घटाधिकरणतामादायघटभि-न्नंकपालत्वादित्यत्राव्याप्तिप्रसक्तिः नवात्यन्ताभावत्वनिरूपितत्ववैय-र्थ्यं यदिचात्यन्ताभावत्वभेदत्वयोर्विरुद्धत्वेऽत्यन्ताभावत्वनिरूपितप्र-तियोगितायाम्भेदात्मकसाध्यनिरूपितत्वासम्भवः एवम् भेदाभाव-स्यभेदप्रतियोगितत्वावच्छेदकान्यतररूपताया एव सिद्धान्तत्वेन तादात्म्येनघटविशिष्टभेदसाध्यकस्थले भेदाभावस्योभयथैव घटरूप-तया तदत्यन्ताभावस्य साध्यानात्मकत्वेनात्यन्ताभावत्वनिरूपित-साध्यनिरूपितप्रातियोगित्वाप्रसिद्ध्याऽव्याप्तिरिति विभाव्यते तदा साध्याभावत्वसमनियतंसाध्याभावत्वावच्छिन्नम्वा यदत्यन्ताभाव-त्वनिरूपितं साध्यनिरूपितप्रतियोगित्वं यच्च साध्याभाववृत्तिभेद-त्वनिरूपितसाध्यनिरूपितप्रतियोगितावच्छेदत्वं तदन्यतरविशिष्ट-साध्याभावत्वावच्छिन्ननिरूपकत्वम्विवक्षणीयम्। वैशिष्ट्यञ्च स्वा-वच्छेदकसम्बन्धावच्छिन्नत्वसम्बन्धेन एवञ्च घटभिन्नं घटत्वत्वाद्घट-भिन्नं कपालत्वादित्यत्र घटत्वनिष्ठतादात्म्यावच्छिन्नघटनिष्ठसमवा-यावच्छिन्ननिरूपकत्वआदायनाव्याप्तिः भवति च तादात्म्यावच्छिन्ना घटत्वनिष्ठा निरूपकतापि तादृशीत्यत्यन्ताभावत्वनिरूपितत्वप्रवेशः तथाच भेदप्रतियोगितानिरूपितसमवायावच्छिन्नावच्छेदकतैव घट-भेदाभावाभावस्य घटभेदानात्मकत्वेऽपि साध्याभाववृत्तिरिति न दोषः कालिकेन घटविशिष्टस्य समवायावच्छिन्नाभावस्य साध्यत्वे-गुणत्वादौ कालिकेन घटविशिष्टात्मकसाध्याभावस्य घटस्यापि स्व-रूपतया तद्वृत्तिसाध्यनिरूपितप्रातियोगितावच्छेदकताघटककालिक-मादायाव्याव्याप्तिवारणायभेदत्वनिरूपितत्वं प्रतियोगिताविशेषणम्। साध्यतावच्छेदकगतरूपवृत्तिसाध्यतानिरूपितसंसर्गतावच्छेदकगत-रूपवृत्तिससर्गताकप्रातियोगिताकाभाववृत्तित्वप्रवेशफलं पूर्ववदेव इयाँस्तु विशेषो यत्तत्र तदत्यन्ताभावाभावमादायात्र तदत्यन्ताभाव-

वह्निभेदमादायेति नच कालिकेनप्रमेयवद्घटभेदस्य साध्यतायांसद्धेतौ कालिकसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नावच्छेदकतामादायाव्याप्तिरितिवाच्यम्। साध्याभावत्वावच्छिन्नाधिकरणतायाः कालिकेनापि घटत्वपत्रसत्त्वात् समवायेनघटत्वाधिकरणवृत्तित्वविशिष्टप्रमेयस्यैव साध्याभावत्वात् उभयस्य साध्याभावरूपत्वे तु तादृशावच्छेदकतात्वव्यापकत्वतादृशप्रतियोगितावत्त्वान्यतरवदधिकरणावृत्तित्वमेव व्याप्तिः व्यापकता च स्वनिष्ठाधिरणतानिरूपितसाध्याभावत्वावच्छिन्ननिरूपकतावच्छेदकसम्बन्धावच्छिन्नत्वसम्बन्धेन प्रतियोगितावत्ताव स्वावच्छेदकसम्बन्धावच्छिन्नसाध्याभावाभावावच्छिन्नरूनिपकताकाधिकरणतावत्त्वसम्बन्धेन तथाच नाव्याप्तिरिति। एतेन कालिकसम्बन्धेनप्रमेयविशिष्टभेदस्य विषयितया साध्यतायान्तज्ज्ञानत्वे प्रमेयनिष्ठावच्छेदकताघटककालिकमादायाव्याप्तिरि यपास्तम् तादृशावच्छेदकतात्वस्यस्वरूपसम्बन्धावच्छिन्नावच्छेदकतायामपि सत्त्वेन तत्र साध्याधिकरणज्ञानस्यासत्त्वात् यद्वा अवच्छेदकतायां साध्याभावत्वसमनियतत्वंप्रवेश्यंकालिकावच्छिन्नावच्छेदकताया अतादृशात्वान्नाव्याप्तिरिति कालिकेनप्रमेयविशिष्टघटभेदसाध्यकस्थलाव्याप्तिश्च साध्याभावत्वस्य घटत्वमात्रस्वीकाराद्वारणीया।

अथ सर्वत्रैवसाध्याभाववद्भेदमादायलक्षणस्यसम्भवात्साध्यनिरूपितप्रतियोगितावच्छेदकताघटकसम्बन्धमात्रमुपादेयंव्यर्थमन्यतरोपादानमितिचेन्न कपिसंयोग्येतत्त्वादित्यादित्यत्र शुद्धस्वरूपेणकपिसंयोगाभाववद्भेदस्यालीकत्वान्निरवच्छिन्नस्वरूपेण कपिसंयोगाभाववद्भेदस्य मूलावच्छेदेनापि सत्तया कपिसंयोगस्वरूपत्वादव्याप्तेस्सर्वथैवदुरुद्धरत्वादिति यद्यप्यतिरिक्ते कपिसंयोगिभेदाभावे कपिसंयोगिभेदनिरूपितप्रतियोगितावच्छेदकत्वन्नास्तीतिभवतिमतिस्तथाप्यतिरिक्तकपिसंयोगिभेदाभाववद्भेदस्यसाध्यीभूतकपिसंयोगिभेदरूपतयातन्निरूपितप्रतियोगितावच्छेदकत्वस्य साध्याभावे सम्भवेन कपिसयोगिभिन्नंगुणत्वादित्यादौ नाव्याप्तिसम्भवः॥ नन्वत्र विषयितयावह्नेस्साध्यतायान्तज्ज्ञानत्वेऽव्याप्तिः विषयित्वसम्बन्धावच्छिन्नवह्न्यभावाभावत्वावच्छिन्नाधिकरणत्वस्य विषयितया वह्निज्ञानेऽसम्भवात्तज्ज्ञानस्यतादृशाभावत्वेन वह्न्यनवगाहित्वात्स्वरूपेण तस्य सत्त्वम्वाच्यमिति न तस्य वह्निरूपत्वमिति साध्याभाववृत्तिसा-

ध्यसामान्यीयप्रतियोगित्वाप्रसिद्धेरितिचेन्न विषयितयाऽव्याप्यव्यापकभावानभ्युपगमएवैतल्लक्षणप्रणयनमित्यभ्युपगमात् । प्रतियोगितायां साध्यसाध्यसमानियतान्यतरनिरूपितत्वस्य वा विवक्षितत्वात्साध्यसामनैयत्यं स्वरूपेणेति साध्यसमनियतातिरिक्ताभावनिरूपितत्वस्य सत्त्वान्नको पिदोषः पदमादधाति ।

अत्रेदमवधेयम् । साध्याभावत्वावच्छिन्न साध्याभावत्वसमनियतस्वा यत्प्रतियोगित्वं साध्यसामान्यनिरूपितं तद्विशिष्टसाध्याभावत्वावच्छिन्ननिरूपकताविवक्षणीया वैशिष्ट्यञ्चस्वावच्छेदकसम्बन्धावाच्छिन्नत्व स्वसामानाधिकरण्योभयसम्बन्धेन एवञ्च घटभेदाभावस्य घटत्वरूपस्य तादात्म्येन घटत्वे घटरूपस्य समवायेन कपाले सत्त्वेऽपि तत्तत्सम्बन्धावच्छिन्नततन्निष्ठनिरूपकतायास्तादृश्यासमवायावच्छिन्नघटत्वनिष्ठप्रतियोगितया तादात्म्यावच्छिन्नघटनिष्ठप्रतियोगितया वा ऽविशिष्टत्वाद्घभिन्नङ्कपालत्वाद्घटत्वत्वाद्वेत्यादौ नाव्याप्तिः तथासत्यत्यन्ताभावत्वनिरूपितत्वस्यापि प्रयोजनविरहेणानिवेशनीयतया समवायेनघटभेदाभावाभावस्य घटभेदास्वरूपत्वेऽपि घटात्मकसाध्याभावनिष्ठभेदीयप्रतियोगितामादायैव घटभेदसाध्यकस्थले लक्षणसङ्गतिः अत्रनिरूपकतायां साध्याभावत्वावच्छिन्नत्वप्रवेशाद्विशिष्टसत्ताभाववान्गुणत्वादित्यत्र सत्ताऽभावाभावत्वावच्छिन्ननिरूपकत्वमादाय नदोषः अथ महानसीयवन्ह्यभावाद्यवच्छिन्ननिरूपकतायांसाध्यनिरूपितवह्निसामान्याभावनिष्ठप्रतियोगित्वसामानाधिकरण्यावेरहेणाव्याप्त्यसम्भवान्निरूपकतायांविवक्षितसाध्याभावत्वावच्छिन्नत्वन्नप्रवशनीयमिति चेन्निरूपकभेदेन निरुपकतायास्तादृशनिरुपकतानिरुपितत्वेनचाधिकरणताया भिन्नत्वेन प्रवेशशनीयम् । प्रनियोगितायान्तत्प्रवेशादेव प्रयोजनस्य वृत्तत्वात् निरूपकतायानिरूपकभेदेन भेदाभावे तु वह्निसामान्याभावसाधारणवह्निनिष्ठप्रतियोगिताकाभावत्वावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावत्वावच्छिन्ननिरूपकत्वादिकमादायाव्याप्तिवारणाय साध्यतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वनिष्ठावच्छेदकतानिरूपित प्रतियोगित्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वं प्रवेशनीयमेव ।

यदिचैवं सति घटभेदाभावत्वावच्छिन्नतादात्म्याद्यवच्छिन्नघट-

घटत्वसाधारणैकनिरूपकतामादाय घटभिन्नंघटत्वत्वादित्यादावव्याप्तितादवस्थ्यमितिवाच्यं घटेघटत्वरूपत्वाद्घटत्वेचघटत्वत्वरूपत्वाद्घटभेदाभावत्वरूपानुयोगिताया उभयत्रैक्यस्वीकृत्याभावत्वव्याप्यानुयोगितावच्छिन्नत्वं प्रतियोगितायांनिरूपकतायाञ्च निवेशनीयम् उभयावृत्तिधर्म्मावच्छिन्नत्वस्यावाच्यमेवञ्च वह्निमान्धूमादित्यादौ पूर्वोक्तयुक्त्यादोषाभावेन उक्तरूरीत्यानिरूपकत्वप्रवेशो न कार्य्यः किन्त्वनुयोगिताविशेषावच्छिन्ननिरूपकतायाम्विशिष्टसत्ताभाववान् गुणत्वादित्यत्राव्याप्तिवारणाय साध्यनिष्ठप्रतियोगितानिरूपकत्वावच्छिन्नत्वं प्रवेशनीयमिति विभाव्यते तदाऽनुयोगित्वविशेषावच्छिन्नत्वप्रवेशार्थमेवतादृशनिरूपकतोक्तिरिति सामानाधिकरण्यानुयोगित्वविशेषावच्छिन्नत्वेऽप्रवेश्य स्वावच्छेदकावच्छिन्नत्वस्य प्रवेशकृते न वैयर्थ्यशङ्कापीति द्रष्टव्यम् ॥

साध्यसामान्यीयत्वाप्रवेशो हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावनिवेशस्य वक्ष्यमाणस्यानुसन्धाने समवायेन प्रमेयसाध्यकज्ञानत्वादिहेतुकस्थले कालिकसम्बन्धावच्छिन्नसाध्याभावाभावस्यापि साध्यरूपतया तत्प्रतियोगितावच्छेदककालिकमादायाप्यव्याप्तिः वक्ष्यमाणस्याननुसन्धाने तु समवायेन प्रमेयसाध्यकद्रव्यत्वप्रकारकप्रमाविशेष्यत्वादिहेतावव्याप्तिर्बोध्या अथसाध्यसामान्यीयत्वञ्च स्वानिरूपकयावत्साध्यकत्वस्वानिरूपकयत्किञ्चित्साध्यकभिन्नत्वन्तदपेक्षया साध्येसाध्यतावच्छेदकसम्बन्धेनवृत्तित्वस्य लघुतया तदेव विवक्षणीयं कालिकसम्बन्धावच्छिन्न साध्याभावाभावस्यातिरिक्तस्य समवायेनावृत्तित्वादितिचेन्न कालिकेन प्रमेयस्य साध्यतायां जन्यत्वादिहेतावव्याप्त्यापत्तेः कालिकसम्बन्धावच्छिन्नसाध्याभावस्यापि कालिकेत वृत्तित्वादित्यलम्पल्लवितेन ॥ ० ॥

ननुसाध्याभावाधिकरणनिरूपिताभावएव व्याप्तिरस्तु किंवृत्तितात्व प्रवेशेनेति चेन्न वह्न्यभावाधिकरणधूमावच्छिन्नप्रतियोगितानिरूपितावच्छेदकत्वस्य धूमे सत्त्वेनाव्याप्त्यापत्तेः नचहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य विवक्षितत्वेन नाव्याप्तिसाम्भव इति वाच्यम् तत्सम्बन्धावच्छिन्ना-

धेयतत्संसर्गीयप्रतियोगितयोगिरेकतयासाध्याभावाधिकरणसंयोग-प्रतियोगित्वमादायऽव्याप्त्यापत्तेः । वृत्तितात्वानवच्छिन्नप्रतियोगिक-स्वरूपसम्बन्धावच्छिन्नप्रतियोगितानिवेशेसाध्याभाववाधिकरणनि-रूपितत्वावच्छिन्नस्यतत्सम्बन्धस्यव्यधिकरणत्वेनतत्सम्बन्धावच्छिन्न तदभावस्यकेवलान्वयित्वेनव्यभिचारिमात्रेऽतिव्याप्त्यापत्तेः वृत्तिता त्वोपादाने तु साध्याभावाधिकरणतावच्छेदकधर्म्मावच्छि-न्ननिरूप्यतानिरूपित निरूपकतावद्वृत्तितात्वावच्छिन्नाभावस्यनिवे-शेन दोषाभावादिति अथैवमपि साध्याभावाधिकरणधूमाधिकरणता-निरूपितवृत्तित्वस्यैवहेतौसत्त्वेनाव्याप्तिः नचाधिकरणताभिन्नत्वम-धिकरणविशेषणमधिकरणताभिन्नं धूमादित्यत्राव्याप्तेः नापि हेत्वधि-करणताभिन्नत्वंधूमाधिकरणताभिन्नंधूमादित्यत्रदोषात् नापि साध्या-भावाधिकरणनिष्ठाधिकरणतानिरूपितवृत्तित्वस्य लक्षणघटकतास-म्भवः । उक्तदोषवारणेऽपि घटाभिन्नमधिकरणतात्वादित्यत्र घटनिष्ठा-धिकरणत्वस्याधिकरणतात्वाधिकरणत्वेनाधिकरणतानिरूपितवृत्ति-त्वस्यैव हेतौसत्त्वेनाव्याप्त्यापत्तेः यद्यप्युक्ताधिकरणताविशिष्टवृत्ति-त्वस्य लक्षणघटकत्वे नोक्तदोषः वैशिष्ट्यञ्च स्वनिरूपितत्वस्वा श्रयनिरूपितत्वोभयसम्बन्धेन तथाप्यवच्छेदकताभिन्नमधिकरणता-त्वादित्यत्राधिकरणतात्वनिष्ठवृत्तितायास्सावच्छिन्नत्वेनावच्छेदकता-त्मकसाध्याभावाधिकरणनिरूपितत्वस्य तन्निष्ठाधिकरणतया अ-धिकरणतात्वाधिकरणत्वेन तन्निरूपितत्वस्य च सत्त्वेनाव्याप्त्यापत्ति-र्दुरुद्धरेति उक्ताधिकरणतावैशिष्ट्यं स्वनिरूपितत्वस्वनिष्ठाधिकर-णत्वानिरूपितत्वोभयसम्बन्धेन वाच्यम् एवञ्च नप्रागुक्तदोषाणाम-वकाशः अधिकरणतात्वनिष्ठ वृत्तिताया मधिकरणतानिष्ठाधिकरण-तानिष्ठाधिकरणतानिरूपितानिरूपितत्वस्य सत्त्वात् । नचैवमप्यवच्छे-दकताभिन्नं वाच्यत्वादित्यादित्यादावतिव्याप्तिः । वाच्यत्वस्यकेवलान्व-यित्वेनाधिकरणतानिष्ठाधिकरणत्वेऽपिसत्त्वेनतन्निष्ठवृत्तितायांस्वनिष्ठा-धिकरणत्वानिरूपितत्वविरहादितिवाच्यं वृत्तितायानिरूपकभेदेनभि-न्नतया साध्याभावाधिकरणावच्छेदकतानिरूपितवृत्तितायां वा-च्यत्वनिष्ठायामवच्छेदकतानिष्ठाधिकरणतानिष्ठाधिकरणतानिरुपित-त्वस्य सत्त्वात् यद्वा साध्याभावाधिकरणतावच्छेदकधर्म्मविशिष्टत्वं वृत्तित्वे विवक्षणीयम् वैशिष्ट्यञ्च स्वावच्छिन्ननिरुपकतानिरुपितनिरु-

प्यत्वावच्छेद्यस्वावच्छिन्नाधिकरणतात्वावच्छिन्ननिरूपकतानिरूपित- निरूप्यतावत्त्वसम्बन्धेन तथाचावच्छेदकत्वस्य अधिकरणतात्वानधि- करणत्वेनावच्छेदकतात्वावच्छिन्नाधिकरणतात्वावच्छेद्यनिरूपकतानि- रूपितनिरूप्यताया अवच्छेदकतात्वावच्छिन्ननिरूपकतानिरूपितनिरू- प्यत्वानवच्छेद्यत्वात् ।

यत्तु साध्याभावाधिकरणवृत्तिवृत्तित्वाभावोव्याप्तिः वृत्तिता च स्वविशिष्टनिरूपकताकाधिकरणतावत्त्वसम्बन्धेन वैशिष्ट्यञ्च स्वाव- च्छेदकसम्बन्धावच्छिन्नत्व स्वावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन त- था च न प्रागुक्तदोषाणामवकाशइति तन्न चारु साध्याभावाधिकर- णनिष्ठाधिकरणतानिरूपितनिरूपकत्वाभावस्यैव लक्षणत्वसम्भवे तत्प- रित्यागस्यानौचित्यात् । एवं सत्युक्ताधिकरणताविशिष्टाभावस्यैव व्याप्तित्वमस्तु पुनर्वृत्तितात्वेनतत्प्रवेशो व्यर्थ एवेति चेदत्रोच्यते साक्षान्निरूपितत्वस्य दुर्निवेशतया साक्षात्परम्परासाधारणन्तद्वाच्यं तथाच साध्याभावाधिकरणनिष्ठधूमावच्छिन्ननिरूपकताकाधिकरण- तानिरूपितधूमत्वावच्छिन्नावच्छेदकत्वस्यावच्छेदकत्वाधयेत्वयोरव- च्छेदकाधेयरूपत्वेनैक्यतया धूमत्वावच्छिन्नवृत्तितारूपस्य हेतौ सत्त्वे- नाव्याप्त्यापत्या स्वनिष्ठनिरूपकतानिरूपिताधयेतात्वावच्छिन्ननिरूप्य- त्वस्य संसर्गताया वाच्यतया तल्लाभार्थमेवाधेयतात्वेन प्रवेश इति यदि च साध्याभावाधिकरणनिष्ठाधिकरणतानिरूपितनिरूपकत्वा- भाव उक्तलक्षणस्य पर्य्यवसानं तदा न वैयर्थ्यशङ्कापि निरूपकतात्वे- नाप्रवेशे घटभिन्नमधिकरणतात्वादित्यत्र घटनिष्ठाधिकरणतानिरूपि- तवृत्तित्वस्याधिकरणतात्वे सत्त्वेनाव्यप्त्यापत्तेरितिदिक् ॥

अथ साध्याभावाधिकरणनिरूपितवृत्तितात्वावच्छिन्नप्रतियोगि- तानिरूपकवत्त्वमेवास्तु लक्षणमभावत्वेन प्रवेशो व्यर्थ इति चेन्न घट- वृत्तिताभिन्नं वृत्तितात्वादित्यत्राव्याप्त्यापत्तेः उक्तप्रतियोगिताकावच्छे- दकत्वस्य वृत्तितात्वे सत्त्वात् । नचावच्छेदकत्वस्याप्यवच्छेदकत्वा- भावाभावत्वेनाभावतयाऽतिव्याप्तितादवस्थ्यमिति वाच्यम् अभाव- त्वस्य भावभेदरूपतयाऽवच्छेदकत्वे तद्विरहात् तादृशप्रतियोगितात्वा- वच्छिन्ननिरूप्यतानिरूपिताभावत्वावच्छिन्ननिरूपकतावतएवव्याप्ति- त्वाद्वा एवञ्चप्रतियोगित्वाभावाभावस्यप्रतियोगितारूपतया तन्निरूपितप्र- तियोगित्वस्योक्तप्रतियोगित्वाभावे सत्त्वेऽपि वह्निमान्वह्न्यभावाधिकर-

णनिरूपितवृत्तितात्वावच्छिन्नप्रतियोगित्वाभावादित्यत्र नातिव्याप्तिः ।

केचिदुक्तस्थलेऽभावत्वेनाप्रवेशेऽपि प्रतियोगितानिरूपकत्वेनप्रवेशादेव नातिव्याप्तिः प्रतियोगित्वस्याभावनिरूपकत्वाभावादित्यपि वदन्तीति वृत्तित्वाभावस्य व्याप्तित्वञ्च स्वरूपेण बोध्यं तेन क्रियात्मक हेतौ व्यभिचारिणि नातिप्रसङ्ग इति ॥

ननु सत्तावान् जातेरित्यत्र सत्ताभाववत्समवेतत्वाप्रसिद्ध्या द्रव्यं विशिष्टसत्त्वादित्यत्र विशिष्टसत्त्वे सत्तानतिरेकेण द्रव्यत्वाभाववद्वृत्तित्वस्य सत्त्वेन चाव्याप्त्यपात्तिरिति चेन्न प्रकृत हेतुतावच्छेदकावच्छिन्ननिरूपकताकाधिकरणत्वीयहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तिताप्रतियोगिकस्वरूपेण वृत्तित्वाभावस्य विवक्षितत्वात् सत्ताभावाधिकरणनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वस्य प्रसिद्धेः विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वीयवृत्तिताप्रतियोगिकस्वरूपेण सत्तात्वावच्छिन्नवृत्तित्वस्यासत्त्वाच्च दोषाभावात् हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वञ्च यदि हेतुतानिरूपितसंसर्गतावच्छेदकावच्छिन्नसंसर्गतानिरूपितत्वं तदा धूमसाध्यके महानसीयसंयोगेन वह्नौ संयोगसम्बन्धावच्छिन्नवृत्तित्वस्य साध्याभाववन्निरूपितस्योक्तसम्बन्धेन हेतौ सत्त्वेनाव्याप्त्यापत्तेः नचोक्तवृत्तित्वाभावान्तर्गतमहानसीयसंयोगसम्बन्धवच्छिन्नवृत्तित्वघटिताभावस्य हेतौ सत्त्वेन नाव्याप्तिरितिवाच्यम् धूमवान्वह्नेरित्यत्र तद्वह्नीयसंयोगसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपेणोक्तवृत्तित्वाभावस्य वह्नौ सत्त्वेनातिव्याप्त्या हेतुतानिरूपितसंसर्गतावच्छेदकतासमानाधिकरणाधेयत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसंसर्गत्वनिष्ठावच्छेदकतानिरूपिताधेयत्वनिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितस्वरूपत्वनिष्ठावच्छेदकतानिरूपितसंसर्गताकप्रतियोगिताकाभावत्वेन निवेशस्याशक्यतयोक्ताधेयत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वादिघटितरूपेणैव संसर्गताया निवेशनीयतयोक्ताव्याप्तितादवस्थ्यादतो हेतुतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितसंसर्गतानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितवृत्तितानिष्ठावच्छेदकताभिन्नस्वरूपत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपि तत्वेनैवसं-

संसर्गतानिवेशनीयेति न दोषः उक्तावच्छेदकताकत्वनिष्ठाव-च्छेदकताभिन्नावच्छेदकत्वानिवेशात्संयोगत्वगतैकत्वावच्छिन्नानुयोगि-ताकपर्य्याप्तिकावच्छेदकतानिरूपितघटप्रतियोगिकत्वनिष्ठावच्छेदक-तानिरूपितसंसर्गताकवृत्तित्वीयस्वरूपसम्बन्धमादाय धूमवान् वह्नेरित्यत्र नातिव्याप्तिः यद्वा हेतुतानिरूपितसंसर्गतावच्छेदक-तासमानाधिकरणाधेयत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदक-त्वानिरूपितावच्छेदकत्वानिष्ठावच्छेदकत्वादिघटितरूपेण संसर्ग-त्वप्रवेशे न कोऽपि दोषः महानसीयसंयोगेन सद्धेतौ महानसी-यत्वनिष्ठावच्छेदकत्वसंयोगत्वनिष्ठावच्छेदकत्वयोर्द्वयोरेव हेतुतानिरू-पितसंसर्गतावच्छेदकत्वसमानाधिकरणत्वेनोक्तावच्छेदकत्वसमाना-धिकरणावच्छेदकत्वादस्योभयत्र विरहेण महनासीयत्वनिष्ठावच्छे-दकतानिरूपितसंयोगत्वनिष्ठावच्छेदकतानिरूपितसंसर्गताकवृत्ति-त्वीयस्वरूपत्वावच्छिन्नसंसर्गताया अपि तादृशत्वेन तन्निरूपकप्रति-योगिताकाभावस्य हेतौ सत्त्वाल्लक्षणसमन्वयः घटीयत्वनिष्ठावच्छेद-कताया उक्तावच्छेदकतासमानाधिकरणत्वविरहेण तन्निष्ठावच्छेदक-ताकसंसर्गतामादाय न दोष इति ॥

अत्र प्रथमउक्तरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकता-निष्ठावच्छेदकतात्वावच्छिन्नसामान्यभेदएव निवेशनीयः अन्यथैका-वच्छेदकताभेदस्यापरावच्छेदकतायां सत्त्वेनावच्छेदकताद्वयनिरूपि-तसंसर्गताघटितसंसर्गताया लक्षणाघटकत्वेन महानसीयसंयोगेन स-द्धेतावव्याप्त्यापत्तेः। अतएव द्वितीयेऽपि हेतुतानिरूपितसंसर्गतावच्छे-दकतासमानाधिकरणावच्छेदकतात्वावच्छिन्नसामान्यभेदस्तादृशाव-च्छेदकत्वनिष्ठावच्छेदकतासामान्यभेदश्च निवेश्यस्तदपेक्षयालाघवेन हेतुतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छे-दकत्वसमानाधिकरणाधेयत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नाधेयस-म्बन्धावच्छिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरू-पितप्रतियोगिताकभेदत्वेनतद्यक्तिनिष्ठावच्छेदकताभेदान्निवेश्य तद्य-क्तिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितसंसर्गतानिष्ठावच्छेद-कत्वादिघटितरूपेण संसर्गता निवेश्या आधेयताच स्वावच्छेदकता-प्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धावच्छिन्नैवेतरवारक-प्रवेशे प्रयोजनविरहात् उक्तपरम्परायाः संसर्गत्वाभावेतूक्तरीत्यानिव-

शस्याशक्यतया गुरुभूतोऽपि द्वितीयकल्प आदरणीयः एवमेव हेतुतावच्छेदकावच्छिन्नत्वमपि परिष्कृतम्बोध्यम् निरूपकतावच्छेदकताया इतरवारकंपर्य्याप्तिनिवेशो प्रयोजनाभावादिति ॥

यदिच वह्निज्ञानत्वसाध्यके प्रकारितया वह्निहेतुकस्थले वह्नित्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकानिरूपकतात्वस्य महानसीयत्ववह्नित्वगतद्वित्ववृत्तिनिरूपकताया मपि सत्त्वेन तन्निरूपिताधिकरणताकवृत्तित्वीयस्वरूपेण साध्याभावाधिकरणनिरूपितमहानसीयवह्नित्वाद्यवच्छिन्नवृत्तित्वस्य वह्निमात्रेसत्त्वादव्याप्तिर्विषयितया हेतुहेतुमद्भावेनच प्रकारितया महानसीयवह्निविषयकज्ञाने कुतो न वह्नेस्सत्त्वं वह्नित्वेतरधर्म्मानवच्छिन्ननिरूपितप्रकारितया हेतुत्वेन तेन सम्बन्धेन महानसीयवह्नेस्सत्त्वमिति कुतो वा व्याप्तिरितिवाच्यं संसर्गता हि यद्यपि प्रकारितात्वेनैव तथापि वह्नित्वविशिष्टसंसर्गो वह्नित्वेतरधर्म्मावच्छिन्नानिरूपितप्रकारितैव महानसीयवह्निविषयकज्ञानं प्रकारितयावह्निमदित्यप्रत्ययात् महामसीयवह्निमदितिज्ञानानन्तरंवह्निज्ञानामीत्यनुव्यवसायाभावाच्चेति,विभाव्यते तदा हेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपे स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वृत्तित्वमेवनिरूपकतायामुपादेयम्॥

अथोक्तरूपवृतिनिरूपकतानिरूपितत्वेनैवाधिकरणतोपादेया अधिकरणतात्वेनतत्प्रवेशो व्यर्थ इति चेत्तस्य स्वनिरूपितत्वस्वनिष्ठाधिकरणतानिरूपितत्वोभयसम्बन्धेनाधिकरणताविशिष्टवृत्तित्वलाभार्थत्वान्न वैयर्थ्यमिति गृहाण नचोक्तविशिष्टवृत्तित्वोपादाने प्रयोजनाभावः वह्निमान् पर्वतवृत्तित्वविशिष्टवाच्यत्वादित्यत्र साध्याभावाधिकरणस्वरूपत्वावच्छिन्नसंसर्गतानिरूपितत्वावच्छिन्नवृत्तिताया उक्तनिरूपकतानिरूपितंसंसर्गतानिरूपितवाच्यत्वत्वावच्छिन्नवृत्तित्वीयस्वरूपेण हेतौ सत्त्वादव्याप्तेर्वारकस्यैव प्रयोजनत्वात् नच स्वनिष्ठाधिकरणत्वानिरूपितत्वन्ननिवेश्यमितिवाच्यम् साध्याभावाधिकरणोक्ताधिकरणतात्मकाधिकरणनिरूपितवाच्यत्वत्वावच्छिन्नवृत्तितामादायाव्याप्तितादवस्थ्यादिति ॥

यत्तु वृत्तितात्वेनवृत्तित्वन्नोपादेयं प्रयोजनाभावादिति तन्न द्रव्यत्वसाध्यके समवायेन प्रमेयविशिष्टस्य समवायेन हेतुतायां सद्धेतौ हेतुतावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणताविशिष्टप्रमेयत्वा-

वच्छिन्नावच्छेदकतायाः स्वावच्छेदकप्रमेयत्वरूपयोः प्रमेयत्वात्मकप्रमेयत्वावच्छिन्नवृत्तितात्मकत्वेन तत्प्रतियोगिकस्वरूपेण साध्याभावाधिकरणनिरूपितप्रमेयत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नवृत्तित्वस्यैव सत्त्वादव्याप्त्यापत्तेः वृत्तितात्वेन तत्प्रवेशे तु स्वनिष्ठनिरूपकतानिरूपितवृत्तितात्वावच्छिन्ननिरूप्यत्वस्य संसर्गतालाभेन प्रमेयावच्छिन्नवृत्तितायामेवाधिकरणताविशिष्टत्वसत्त्वेन नाव्याप्तिसम्भव इति यद्यप्यत्रहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्ननिरूपकत्वीयस्वरूपेण साध्याभावाधिकरणनिष्ठाधिकरणतानिरूपितनिरूपकत्वाभावस्य लघुतरस्य व्याप्तित्वं सम्भवति तथापियथाश्रुतमूलानुरोधात्तदुपेक्षितम् ॥

ननु कालिकसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकवृत्तित्वीयस्वरूपेण वह्न्यभावाधिकरणनिरूपितवृत्तित्वस्य धूमे सत्त्वादव्याप्तिः हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताविवक्षयोक्तदोषवारणेऽपि महानसीयवह्निसाध्यके समवायेन महानसीयत्वविशिष्टत्वेसाते कालिकेन धूमत्वविशिष्टहेतुकेऽव्याप्त्यापत्तिःकालिकसम्बन्धावच्छिन्नमहासीयत्वनिष्ठावच्छेदकतानिरूपितसमवायसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकवृत्तिताया हेतौ सत्त्वादिति चेन्न वृत्तितायां आश्रयभेदेन भिन्नतया धूमस्य कालिकेन धूमत्वाश्रयत्वेऽपि संयोगेन धूमस्य ह्रदावृत्तित्वानपायात् एतदभिप्रायेणैव विशिष्टसत्वस्य स्वावच्छिन्नाधिकरणत्वेनैव द्रव्यत्वव्याप्यत्वं स्वीकृत्य हेतुतावच्छेदकावच्छिन्नाधिकरणत्वप्रवेशनस्विफलमाकलय्य हेतुतावच्छेदकाघटितस्य व्याप्तिरूपत्वस्वीकारो ग्रन्थान्तरे पर्य्यालोचनीयः अन्यथा हेतुतावच्छेदकाप्रवेशे प्रमेयत्वाद्यवच्छिन्नवृत्तितामादायासम्भवापत्तेरिति वृत्तिताया एकधर्म्मावच्छिन्नाया यावत्स्वावच्छेदकाश्रयेष्वेकत्वे तु हेतुतावच्छेकताविशिष्टावच्छेदकतानिरूपितत्वादिरुपंहेतुतावच्छेदकावच्छिन्नत्वम्वाच्यं। वैशिष्ट्यञ्च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन अधिकन्तु साध्यतावच्छेदकावच्छिन्नत्वविचारवदनुसन्धेयमित्यलम् ॥

अथधूमवानवह्नेरित्यत्रातिव्याप्तिः। निरुक्तवृत्तित्वाभावस्य पर्व्वतीयवह्न्यादौ सत्त्वादिति चेन्नअनुपदोक्तवृत्तितैक्यपक्षे दोषस्यासम्भवात्पक्षान्तरे तत्रोक्ताभावस्य सत्त्वेऽपि तस्य लक्ष्यत्वमेवेत्यन्ये वह्नित्वे-

यदि च वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वे साध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धित्वाभाववद्धेतुतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धितावच्छेदकप्रकृतहेतुतावच्छेदकस्यैव वा व्याप्तित्वे न दोषः अभावश्चस्वरूपसम्बन्धावच्छिन्नस्वाभाववन्निरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वसम्बन्धावच्छिन्न प्रतियोगिताक इति । एतेन स्ववृत्तिवाच्यत्ववत्त्वसम्बन्धेन घटादिसाध्यकस्थले ऽव्याप्तिः तत्सम्बन्धावच्छिन्नाभावस्याप्रसिद्धत्वादिति निरस्तम् स्वरुपसम्बन्धावच्छिन्नाभावस्य प्रसिद्धेरिति विभाव्यते तदात्रकेचित्सम्बन्धितायानानात्वे धूमवान् वह्नेरित्यातिव्याप्तिः पर्व्वतीयवह्न्यादिसम्बन्धितायाउक्तसम्बन्धित्वाभाववत्त्वेन तदवच्छेदकत्वस्य वह्नित्वे सत्त्वात् यद्धर्म्मावच्छिन्नसम्बन्धित्वत्वावच्छेदेनोक्तसम्बन्धित्वाभाववत्त्वविवक्षणे उक्तदोषवारणेऽप्युक्तसम्बन्धितात्वावच्छेद्यत्वस्य व्यापकतारूपत्वेन सिद्धान्तलक्षणापेक्षया लघुत्वाभावः अव्यभिचरितत्वस्य पारिभाषिकत्वापत्तेः उक्तस्य व्यभिचारज्ञानाप्रतिबध्यत्वेन व्याप्तिरूपत्वासम्भवश्चेति वदन्ति तन्न चारु स्वाभाववन्निरूपितसम्बन्धितावच्छेदकत्वसम्बन्धावच्छिन्नोक्तसम्बन्धित्वाभाववद्धेतुतावच्छेदकस्यव्याप्तित्वेउक्तातिव्याप्तिसम्भवात् एवमुक्तपारिभाषिकत्वस्य नदोषत्वमन्यथा द्रव्यं विशिष्टसत्त्वादित्यादिस्थलीयाव्याप्तिवारणायोक्तस्य लक्षणस्य पारिभाषिकार्थकत्वेनहेयत्वमापद्येत साध्याभाववद्वृत्तित्वस्यैव व्यभिचारत्वे समानप्रकारत्वादिनैव प्रतिबन्धकत्वे च सिद्धान्तव्याप्तेरपि तदप्रतिबध्यतयाऽव्याप्तित्वप्रसङ्गः नच हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वमपि व्यभिचार इति नेदोष इति वाच्यं प्रतियोगिताधर्म्मिकोभयाभावघटितकल्पस्य सिद्धान्तत्वेन तज्ज्ञानस्योक्तव्यभिचारज्ञानप्रतिबध्यत्वविरहात् यदिमाणिमन्त्रादिन्यायेनोक्तव्याप्तिज्ञानस्याप्युक्तव्यभिचारज्ञानप्रतिबध्यत्वं तदा प्रकृतव्याप्तिज्ञानस्यापितत्त्वं सुघटमेव तादृशव्याप्तिज्ञानाविरोधिज्ञानविषयव्यभिचारकल्पना च प्रकृतेपि समेति

अत्रब्रूमः स्वनिष्ठप्रतियोगिताकाभाववद्वृत्तित्वस्य संसर्गत्वेऽसम्भवापत्त्याऽवच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वस्य संसर्गत्वम्वाच्यन्तथासति गुरुधर्म्मस्यप्रतियोगितानवच्छेदकत्वे तद्रूपवान् रसादित्यत्रातिव्याप्तिः तद्रूपत्वावच्छिन्नसम्बन्धित्वाभावप्रतियोगितावच्छेदक-

त्वस्य लाघवेन तद्व्यक्तित्व एव कल्पनीयतयोक्तावच्छिन्नाभाववद्वृत्तित्वस्य तद्रूपत्वावच्छिन्नसम्बन्धित्वव्याधिकरणत्वेन तदभावस्य हेतुतावच्छेदकावच्छिन्नसम्बन्धित्वे सत्त्वात् उक्तसम्बन्धिताव्यक्त्यभावनिवेशे वह्निमान्धूमादित्यत्राव्याप्तिः उक्तसम्बन्धितात्वंयद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तद्रूपावच्छिन्नाभाववत्त्वविवक्षणे तद्रूपावच्छिन्नसम्बन्धितात्वस्य गौरवेण रूपत्वावच्छिन्नसम्बन्धितात्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वेन तद्रूपावच्छिन्नाभाववत्त्वस्य हेतौ सत्त्वेनातिव्याप्तिप्रसङ्गः यद्रूपावच्छिन्नाभावकूटवत्त्वविवक्षा च वह्निमान्धूमादित्यादावव्याप्त्यैवानुपादेया तद्रूपावच्छिन्नाभावकूटान्तर्गतस्य तद्व्यक्त्यभावस्य धूमे विरहात् एवं वाच्यं ज्ञेयत्वादित्यादावपि साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसम्बन्धित्वाभावप्रतियोगितावच्छेदकत्वस्य सम्बन्धितात्व एव लाघवेन कल्पनीयतया तादृशसम्बन्धितात्वावच्छिन्नाभावाप्रसिद्ध्याऽव्याप्तिप्रसङ्गः यदिगुरुधर्म्मस्य प्रतियोगितावच्छेदकत्वमङ्गीक्रियते तदैतस्य लक्षणान्तरत्वमेवावसेयमितिध्येयम् ॥

अथनिरूप्यानिरूपकभावापन्नाविषयतात्मकसाध्याभाववद्वृत्तित्वप्रकारतानिरूपितविशेष्यत्वाभावः प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकोव्याप्तिरस्त्विति चेन्न यत्र व्यभिचारिणि साध्याभाववद्वृत्तित्वस्य न प्रमा तत्रातिव्याप्त्यापत्तेःनचेश्वरस्यैवप्रमासम्भवः विशकलितपदार्थावगाहित्वेनैव सर्व्वविषयकत्वोपपत्तौ विशिष्टविषयकत्वे मानाभावात् एवं वृत्त्यानियामकसम्बन्धस्य गुरुधर्म्मस्य च प्रतियोगितानवच्छेदकत्वे धीः द्रव्यत्वात्प्रमेयधूमवान्वह्नेरित्यादावतिव्याप्त्यापत्तेरित्यलम्



# काशीसंस्कृतसीरीज़-ग्रन्थमाला।

इयं काशी-संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति। एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति। अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते।



१ नलपाकः नलविरचितः। संपूर्णः (पाकशास्त्रम् १) रु० १—८

२ संक्षेपशारीरकम्। रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम्। (वेदान्तं १) रु० ८—०

३ वैशेषिकदर्शनम्। पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यांसमन्वितम् (वैशेषिकं १) रु० २—०

४ श्रीसूक्तम्। विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम्। (वैदिकं १) रु० ०—६

५ लघुशब्देन्दुशेखरः (भैरवी) चन्द्रकलाटीकासहितः-प्रथम भाग अव्ययीभावान्तः। (व्याकरणं १) रु० ५—०

५ लघुशब्देन्दुशेखरः (भैरवी) चन्द्रकलाटीकासहितः तत्पुरुषादि-समाप्तिपर्यन्तः। द्वितीय भाग (व्याकरणं १) रु० ८—०

६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता। (न्यायं १) रु० ६—०

७ पञ्चीकरणम्। वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम्। (वेदान्तं २) रु० ०—८

८ अलङ्कारप्रदीपः। श्रीविश्वेश्वरपाण्डेयनिर्मितः। (काव्यं १) रु० ०—८

९ अनङ्गरङ्गः। महाकविकल्याणमल्लविरचितः। (कामशास्त्रं १) रु० ०—१२

१० जातकपारिजातः। श्रीवैद्यनाथशर्मणा विरचितः। (ज्यो० १) रु० २—०

११ पारस्करगृह्यसूत्रम्। कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम्। (कर्मकाण्डम् १) रु० ०—८

१२ पुरुषसूक्तम्। सायणभाष्य-महीधरभाष्य-मंगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम्। (वैदिकं २) रु० १—४

१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम्। (वेदान्तं ३) रु० १—४

१४ कुमारसंभवं महाकाव्यम्। महाकवि श्रीकालिदासवि०। सञ्जीवनी शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम्। (काव्यं २) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः। आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः। (छंदः १) रु० ०—६

१६ कारिकावली। मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा। (न्यायं २) रु० १—०

१७ पारस्करगृह्यसूत्रम्। काण्डद्वये हरिहर-गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम्। हरिहरभाष्यसहितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्ठोदिवि-शौच-भोजन—

१८ संक्षेपशारीरकम् । मधूसूदनीटीकासहितम् संपूर्णं (वेदान्त४) रु० ८—०
१९ लघुजूटिका—अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः। (व्याकरणं २) रु० ०—८
२० कातीयेष्टिदीपकः । ( दर्शपौर्णमासपद्धतिः ) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः । ( कर्मकाण्डं ) रु० १—०
२१ सप्तपाठि श्रीशिवमहिम्नस्तोत्रम् । श्रीगन्धर्वराज पुष्पदन्ताचार्यविरचितम् । हरिहरपक्षीय-मधुसूदनीटीकया ( संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषपद्यानुवाद-भाषा विम्ब ) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम् । ( स्तोत्रवि० १ ) रु० १—०
२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायविन्दुः । भाषाटीकासहितः । ( बौद्धन्याय वि० १ ) रु० १—८
२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः । (व्याकरणं ३)रु०४—०
२४ न्यायवार्त्तिकतात्पर्य्यटीका । श्रीवाचस्पतिमिश्रविरचिता । सम्पूर्ण ( न्यायविभाग ३ ) रु० ६—०
२५ मीमांसान्यायप्रकाशः । (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः । ( मीमांसा १ ) रु० २—०
२६ पौरोहित्यकर्मसारः । (टिप्पणीसमलंकृतः) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः । ( कर्मकाण्डवि० ३ ) रु० ०—४
२७ लघुशब्देन्दुशेखरः । म० म० श्रीनागेशभट्टविरचितः अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीयकृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः । (व्या०४) रु० ४—८
२८ रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् पञ्चसर्गात्मकम् । म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं०श्रीकनकलाल ठक्कुरकृताऽर्थप्रकाशिकाटीकया च समलङ्कृतम् । (काव्य३) रु० १२—०
२९ कामसूत्रम् । श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरासादितया पूर्णया जयमङ्गलरचितया टीकया समेतम् । बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम् । ( काम०२ ) यन्त्रस्थ
३० न्यायकुसुमाञ्जलीः । न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः । म० म० रुचिदत्तकृतमकरन्दोद्भासित म० म० वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः । ( न्यायं ४ ) रु० ६—०
३१ परिभाषेन्दुशेखरः । म० म० श्रीनागेशभट्टरचितः । म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या—तत्त्वप्रकाशिकया टीकया च सहितः । (व्याकरणं ५) यन्त्रस्थ
३२ अर्थसंग्रहः । पूर्वमीमांसासारसंग्रहरूपः । श्रीलौगाक्षिभास्करविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयागिभिक्षुविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः । (मीमां०२)रु०१—०
३३ न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनभाष्योपबृंहणम् । परमर्षि-

३४ शुक्लयजुर्वेदसंहिता। वाजसनेयिमाध्यन्दिनशाखीया। श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता। (भाग १-२-३-४) (वैदिकं ३) रु० ८—०

३५ शुक्लयजुर्वेदकाण्वसंहिता। श्रीसायणाचार्यविरचितभाष्यसहिता। १ अध्यायादारभ्य २० अध्यायपर्यन्ता। (वैदिकं ४) रु० ६—०

३६ सिद्धान्तलेशसंग्रहः। श्रीमदप्पयदीक्षितविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः। (वेदान्तं ४) रु० ६—०

३७ काशिका। श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्वद्वर-वामन-जयादित्यविनिर्मिता। (व्याकरणं ६) रु० ६—०

३८ प्राकृतप्रकाशः। भामहकृतः। श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसहितः। टिप्पण्या च संयोजितः। (व्याकरणं ७) रु० १—४

३९ जीवन्मुक्तिविवेकः श्रीमद्विद्यारण्यस्वामिविरचितः। भाषानुवादसमेतः। (वेदान्तं ६) रु० २—०

४० श्रीनारदीयसंहिता। ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्यौतिषग्रन्थः। (ज्यौतिषं २) रु० ०—६

४१ मेदिनीकोशः। मेदिनीकारविरचितः। (कोशं १) रु० १—८

४२ मीमांसादर्शनम्। श्रीशबरस्वामिविरचितभाष्यसहितम् सपूर्णम्। (भाग१—२) (मीमांसा ३) रु० १०—०

४३ न्यायदर्शनम्। श्रीगोतममुनीप्रणीतम्। श्रीवात्स्यायनमुनीप्रणीतभाष्यसहितम्। श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितन्यायसूत्रवृत्त्यनुगतम्। टिप्पण्यादिसहितम् (न्यायं ६) रु० ३—०

४४ दानमयूखः। विद्वद्वरश्रीनीलकण्ठभट्टविरचितः। (धर्मशास्त्रं१) रु० १—८

४५ कालमाधवः। विद्वद्वरश्रीमाधवाचार्यविरचितः। (धर्मशास्त्रं२) रु० १—८

४६ भास्वती। श्रीमच्छतानन्दविरचिता। श्रीमातृप्रसाद (दैवज्ञभूषण) पाण्डेयेन कृताभ्यां छात्रबोधिनीनाम संस्कृतसोदाहरण भाषाटीकाभ्यां सहिता। (ज्योतिषं ३) रु० २—०

४७ फक्किकाप्रकाशः। उपाध्यायोपाह्ववैयाकरणकेसरीविरुदाङ्कितमैथिलेन्द्रदत्तशर्मविरचितः। पं० सीतारामशर्मकृतटिप्पण्या विभूषितः। (व्याकरणं ८) रु० १—४

४८ मिताक्षरा। श्रीगौडपादाचार्यकृतमाण्डूक्यकारिकाव्याख्या—श्रीमत्परमहंसपरिव्राजकाचार्यस्वयम्प्रकाशानन्दसरस्वतीस्वामिकृता। शंकरानन्दकृतमाण्डूक्योपनिषद्दीपिका च। (वेदा०७) रु० १—४

४९ काव्यप्रकाशः। श्रीमम्मटाचार्यविरचितः। पं० श्रीहरिशङ्करशर्मणा मैथिलेन संगृहीतया नागेश्वरीटीकयाऽलङ्कृतः। (काव्य०४) रु० ४—०

५० अधिकरणकौमुदी। श्रीदेवनाथठक्कुरकृता। (मीमां० ४) रु० १—०

५१ रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम् म.म. श्रीमल्लिनाथकृतसञ्जीविनीटीकयोपेतम् पं० श्रीकनकलालठक्कुरेण कृता भावबोधिनी टिप्पण्या समलङ्कृतः संपूर्णम्। (काव्य ५) रु० १-४

५२ कायबोधः। साजनीकृत टीकोपेतः। दत्तात्रेय सम्प्रदायाऽनुगतः। रु०—८

५३ रसचन्द्रिका। श्रीविश्वेश्वरपाण्डेय निर्मिता। (काव्य० ६) रु०१—०

५४ अलङ्कारमुक्तावली। श्रीविश्वेश्वर पाण्डेयनिर्मिता। (काव्य०७)रु०-१२-०

५५ वृत्तरत्नाकरः भट्टकेदारप्रणीतः। नारायणभट्टीयव्याख्यासहितः।

५६ अलङ्कारशेखरः । केशवमिश्रकृतः । साहित्योपाध्याय श्री अनन्तराम-शास्त्रिणा भूमिकादिभिः संभूष्य संशोधितः । (अलं० वि० १) रु० १-४

५७ शक्तिवादः । श्रीगदाधरभट्टाचार्यप्रणीतः । टीकात्रयोपेतः । कृष्ण-भट्टकृतया मञ्जूषया-माधवभट्टाचार्यनिर्मितया विवृत्या श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शना-द्याचार्यतर्करत्नन्यायरत्न गोस्वामिदामोदरशास्त्रिरचितया विनोदिन्या च समेतः । ( न्या० वि० ७ ) रु० २-०

५८ प्रौढमनोरमा । म. म. श्रीभट्टोजीदीक्षितविरचिता तत्पौत्र म. म. श्रीहरिदीक्षितविरचितलघुशब्दरत्नाख्यव्याख्यासमेता । म. म. पण्डितश्रीभैरवमिश्रविरचितशब्दरत्नव्याख्यया युक्ता । श्रीयुतभाण्डारीत्युपाह्वमाधवशास्त्रिविरचित प्रभानामकटिप्प-ण्या समलङ्कृता । श्रीयुतजगन्नाथशास्त्रिविरचितयाव्ययी-भावस्य शब्दरत्नप्रदीपकनामकटीप्पण्याऽलङ्कृता ( अव्ययी भावान्तः प्रथमो भागः ) ( व्याकरण वि० ९ ) रु० ५—०

५९ आपस्तम्बगृह्यसूत्रम् । श्रीहरदत्तप्रणीतयाऽनाकुलाख्यया व्याख्यया, श्रीसुदर्शनाचार्यप्रणीतया तात्पर्यदर्शनाख्यया व्याख्यया च समलङ्कृतम्, पृथक् सूत्रपाठेन, पाठभेदेन, मीमांसापदार्थविव-रणेन च संयोजितम् । ( कर्म० वि० ५ ) रु० ३—०

६० नाट्यशास्त्रम् । भरतमुनिप्रणीतम् ( सम्पूर्णम् ) साहित्योपाध्याय एम.ए. इत्यादिपदवीभाजा पण्डित बटुकनाथ शर्म्मणा तथा साहित्यशास्त्रि एम.ए. पदवीभृता पण्डित बलदेवोपाध्यायेन च सम्पादितम् । ( नाट्यशास्त्र वि० १ ) रु० ५—०

६१ काव्यालङ्कारः । श्रीभामहाचार्येण विनिर्मितः । काशीविश्वविद्यालयाध्यापकाभ्यां पण्डित बटुकनाथ शर्मा एम० ए० साहित्योपाध्यायः तथा पण्डित बलदेव उपाध्याय एम० ए० साहित्यशास्त्री इत्येताभ्यां भूमिकादिभिः समलङ्कृत्य सम्पादितः, काशी विश्वविद्यालयोपकुलपतिपदं विभूषयद्भिः श्रीमदाचार्यप्रवरैः आनन्दशङ्कर ध्रुव महोदयैः लिखितेन प्राक्कथनेन सनाथीकृतः । (अलङ्कार वि० २) रु० १-८

६२ ब्रह्मवादः । गोस्वामि श्रीहरिरायजी महाराज विरचितः । श्रीगोपालकृष्णभट्ट विरचित विवरणाख्यव्याख्यासमलङ्कृतः । तथा गोस्वामी श्रीव्रजनाथविरचितो ब्रह्मवादः । तथा शुद्धाद्वैतपरिष्कारः श्रीमद्रामकृष्णभट्ट विरचितः । श्रीरघुनाथशास्त्रि विरचित शुद्धाद्वैतपरिष्कारतात्पर्यम् । श्रीहरिशङ्कर शास्त्रि-वेदान्तविशारदेन विस्तृत भूमिकया विविधपरिशिष्टैर्भाषानुवादेन टिप्पण्यादिना च समलङ्कृतः । ( शुद्धाद्वैतसम्प्रदाय वि० १ ) रु० १—०

६३ प्रेमरसायनम् । श्रीविश्वनाथपण्डितरचितम् (का०वि० ८) रु० १—०

जयकृष्णदास—हरिदासगुप्तः,

चौखम्बा संस्कृत सीरीज आफिस, विद्याविलास प्रेस

